एकविंशतिवारन्तु शोष्यंपेष्यं पुनः पुनः ॥
चूर्णपादंमृतंलोहंमध्वाज्यंशर्करान्वितम् ॥ ७७ ॥

ऐसे इक्कीस बार भावना देकर सुखावै इस चूर्णसे चौथाई लोहभस्म डाले इसमें शहत घृत मिश्री डाले ॥ ७७ ॥

पलैकंभक्षयेन्नित्यंसिताक्षीरैःपिबेदनु ॥
कामयेत्स्त्रीशतंनित्यंधात्रीलोहप्रभावतः ॥ ७८ ॥
इति धात्रीलोहम् ॥

इसको प्रतिदिन एक पल खाय मिश्री सहित ऊपर दूध पीवे इस धात्रीलोहके प्रभावसे सौ स्त्रीकी नित्य इच्छा करसकता है ७८

इति धात्रीलोह ॥

---

वानरीबीजचूर्णंतुनिस्तुषंमाषचूर्णितम् ॥
नारिकेलोदकैर्भाव्यंयामान्तंपेषयेत्समम् ॥ ७९ ॥

कौंचके बीजोंका चूर्ण छिलके रहित उडदोंका चूर्ण लेकर नारियलके रसकी भावना देकर एक प्रहरके उपरान्त उसको पीसले ॥ ७९ ॥

पिष्टस्यविंशद्विंशेनमृतमभ्रंनियोजयेत् ॥
तद्वत्तैर्वटिकाकार्यामध्वाज्याभ्यांतुभक्षयेत् ॥८०॥

अच्छे प्रकार उसको पीसकर शुद्ध अभ्रक उसमें डालै इस प्रकार उनकी वटिका करके शहत और घृतके साथ भक्षण करै ॥ ८० ॥

पीत्वाक्षीरंसितायुक्तंरम्यांरामांरमेच्छतम् ॥
सताम्बूलंशतामूलंमनुपानंनिरन्तरम् ॥ ८१ ॥

इसके ऊपर मिश्री डालकर दूध पीवे तो अनेक स्त्रियोंके साथ रमण कर सकता है इसके ऊपर निरंन्तर ताम्बूल भक्षण करै॥८१॥

ऊर्णनाभिभवंबीजंमधुनासहपेषयेत् ॥
तेननाभिप्रलेपेनबंधःसद्योविमुंचति ॥ ८२ ॥

मकडीको शहतके साथ इस्के नाभिपर लेप करनेसे स्त्रीसे बद्ध हुआ पुरुष शीघ्र मुक्त होता है अर्थात् मैथुनमें समर्थ होताहै॥८२ ॥

अन्तरिक्षेनसंग्राह्यंयत्नाद्वागुटिकामलम् ॥
तेनालिंगप्रलेपेनरमेद्रामाशतंनरः ॥ ८३ ॥

अन्तारिक्षसे गुटिका मलले इसका ध्वजापर लेप करे तो मनुष्य सौ स्त्रियोंसे रमण करसकता है ॥ ८३ ॥

सम्यङ्मारितमभ्रकंकटफलंकुष्ठाश्वगंधामृता
मेथीमोचरसंविदारमुशलीगोक्षूरमिक्षूरकम् ॥
रंभाकंदशतावरीह्यजमुदामाषास्तिलाधान्यकं
यष्टीनागबलाकचूरमदनंजातीफलंसैन्धवम् ॥ ८४॥

अच्छी प्रकार शोधा अभ्रक शोधा हुआ कट्फल कूठ अजमोद गिलोय मेथी मोचरस विदारीकंद मुशली गोखरू कोकिलाक्ष के बीज कंदलीकंद शतावरी अतिबला उडद तिल धनियां असगंध खरैंटी मुलहटी और नागबला कचूर मैनफल जायफल सेंधा॥८४॥

मार्गीकर्कटशृंगभृंगत्रिकटुकंजीरद्वयंचित्रकं
चातुर्जातुपुनर्नवागजकणाब्राह्मीनिशावासकम् ॥
बीजंमर्कटिशाल्मलंफलत्रिकंचूर्णसमंकल्पयेत्
चूर्णसंविजयासिताद्विगुणितामध्वाज्ययोःपिंडितम्॥८५॥

कस्तूरी काकडासिंगी भांगरा त्रिकटु दोनोंजीरे तज पत्रज इलायची दालचीनी नागकेशर पुनर्नवा गजपीपल ब्राह्मी हलदी अडूसा कौंचके बीज सेमल त्रिफला इनको बराबर लेकर चूर्ण

करै, उस चूर्णके समान भंग, दूनी मिश्रीले इसमें घृत और मधु डालकर इसकी वटिका बनाले ॥ ८५ ॥

कर्षार्द्धम्वटिकाविलेह्यमथवासेव्यंसदासर्वदा
पेयंक्षीरसितानुवीर्य्यकरणेस्तम्भेप्ययंकामिनीम्॥८६॥
वामावश्यकरंपरंचसुखदंप्रौढांगनाद्रावकं
क्षीणेपुष्टिकरंगदक्षयकरंहन्त्याशुसर्वामयम् ॥८७॥

इसकी आधे कर्षकी वटिका बनावै उसको चाटे अथवा वैसेही सेवन करै इसके ऊपर मिश्री डालकर दूध पीवे तो यह स्त्रीको स्ताम्भित कर सकताहै यह स्त्रीको वशमें करनेवाला सुखदायक प्रौढ स्त्रियोंको प्रेरणा करने वालाहै क्षीणवीर्यमें पुष्टिका करने वाला रोगक्षयकर शीघ्र सब रोगोंका नाशकहै ॥ ८६ ॥ ८७ ॥

कासश्वासमहातिसारशमनंमन्दाग्निसंदीपनं
अर्शंसंग्रहणीप्रमेहनिचयंश्लेष्मातिरक्तप्रणुत् ॥
नित्यानन्दकरंविशेषकविताबाचांविलासोत्तमं
धत्तेसर्वगुणंहठात्स्ववदशाध्यानप्रधानंपुनः ॥ ८८ ॥

कास श्वास महाअतिसारका शमनकरनेवाला मन्दाग्निका प्रदीप्त करने वाला बवासिर संग्रहणी सबप्रकारके प्रमेह कफके रोग रक्तरोगको दूरकरताहै नित्य आनन्द करनेवाला विशेष कर विशेष बुद्धि आदिकेगुण देताहै सम्पूर्णगुण इसके प्रभावसे प्राप्तहोजातेहैं८८

अभ्यासेननिहंतिमृत्युपलितंकामेश्वरोवत्सरात्
सर्वेषांहितकारकोनिगदितःश्रीनित्यनाथेनसः ॥
वृद्धानांमदनोदयोदयकरःप्रौढांगनासंगमे
सिद्धोयंसमदृष्टप्रत्ययकरोराज्ञासदासेव्यताम् ॥ ८९ ॥

इति कामेश्वरः ।

और इसके अभ्याससे मृत्यु जीती है बालोंका अकालमें पकना दूर होता है यह सबका हितकारक कामेश्वररस नित्यनाथने कहा है. वृद्धोंको कामउदय करनेवाला प्रौढ अंगनाके संग में सुख देनेवाला यह सिद्ध राजोंको सदा विश्वासकर सेवन करना चाहिये ॥ ८९ ॥

इतिकामेश्वररसः ।

यत्किंचिन्मधुरस्निग्धंजीवनंबृंहणंगुरुः ॥
हर्षणंमनसश्चैवतत्सर्ववृष्यमुच्यते ॥ ९० ॥

जोकुछ वस्तु मधुर चिकनीहै वह जीवनकारक और भारीहै मन को वर्षण करनेवाली जो वस्तुमात्र है वह सब वृष्य कहातीहै ९०

नरोवीर्य्यकरान्योगान्सम्यक्शुद्धोनिरामयः ॥
आसप्ततेःप्रकुर्वीतवर्षादूर्द्ध्वंचशोडशात् ॥ ९१ ॥

वीर्यकारी पदार्थोंको शुद्ध रोगहित होकर सेवन करना चाहिये सोलह वर्षसे ऊपर ७० वर्षतक इनयोगोंको सेवन करे॥९१॥

नचवैषोडशाद्वर्षात्सप्तत्यात्परतोनचं ॥
आयुःकामोनरःस्त्रीभिःसंयोगंकर्त्तुमर्हति ॥
कल्पःसोदग्धवयसोवाजीकरणसेवितः ॥ ९२ ॥

सोलहसे न्यून और सत्तर वर्षसे अधिक योगोंको सेवन न करे आयुकी कामना करनेवाला मनुष्य स्त्रियोंसे इस प्रकार संयोग करे वाजीकरणकल्पसे शरीर पुष्ट होजाता है और इसके होनेसे उत्साह और इष्ट सिद्ध होता है ॥ ९२ ॥

आयुष्मंतोमन्दजरावयुर्वीर्य्यबलान्विताः ॥
स्थिरोपचितमांसाश्चभवंतिस्त्रीषुसंयतम् ॥
त्रिभिस्त्रिभिरहोभिश्चसेवेतप्रमदांनरः ॥ ९३ ॥

आयुवाले मन्दजनभी वीर्यबलसे युक्त होजाते हैं स्थिर आरोग्य-बलसे युक्त हो मन्दभी स्त्रीसंयुक्त होते हैं तीन दिनमें

स्त्रिको सेवन करे अर्थात् तीसरे दिन स्त्रीका संगम करना उचित है ॥ ९३ ॥

(?) सर्वेषुऋतुग्रीष्मेषुपक्षात्पक्षाद्व्रजेद्बुधः ॥
योगोनसेव्यवृतानसुशृतयिपयःशीतलंचाम्बुपीत्वा
गच्छेन्नारिंस्वरूपांस्मरवसतलांकामुकःकामलीलः ॥
सोनहृष्टप्रहृष्टोव्यपगतसुरतःसंधयेन्नित्यनित्यं
कान्तासंगादसकृदपिनरोधातुवैषम्यमेति ॥ ९६ ॥
ग्लानिकम्पोरुदौर्बल्यंधात्विन्द्रियबलक्षयः ॥
क्षयवृद्ध्युपदंशाद्यारोगाश्चातीवदुर्जयाः ॥९७॥ (?)

सबसे अधिक बलकी आवश्यकताहै ग्रीष्ममें न्यून प्रसंगकरै एक पक्षमें गमन करै जो बलवर्द्धक औषधियोंको सेवन नहीं करता वह दुर्बल यह योग न सेवन करै शीतल जलपान करके वा औटाया दूध पीकर कामीजन रूपवती स्त्रीसे गमन करै यत्नपूर्वक रातके समय प्रेम और धारतासे सेवन करै ग्रीष्मकालकी यह विधिहै अति प्रसंगवर्जित करना और जो इससे अन्यथा स्त्रियोंको सेवन करते हैं उनको ग्लानि कम्पा दुर्बलता धातु इन्द्रियोंका बल क्षय होता है.तथा क्षय अंडवृद्धि उपदंशादि दुर्जय रोग होते हैं९६॥९७

अकालमरणंचैवभजतः स्त्रियमन्यथा ॥
शोषकासज्वरार्शांसिश्वासकार्श्यातिपांडुता ॥९८॥

इसकारण अकालमें स्त्रीके भजनेसे अकालमें मरणभी होताहै शोषरोग, श्वास कास ज्वर आदि पाण्डुरोग ॥ ९८ ॥

अतिव्यवायाज्जायन्ते रोगाश्चक्षयकादयः ॥
असेवनान्मोहमदोग्रन्थिरग्नेश्चमार्दवम् ॥ ९९ ॥

अति रति करनेसे क्षयादि रोग होजाते हैं विना सेवनके मोह-ग्रंथी आदि तथा अग्निकी मृदुता होती है ॥ ९९ ॥

त्यजेप्रीत्यादिशुचितांलोकाध्यक्षंचमैथुनम् ॥
जरयाचिंतयाशुक्रंव्याधिभिःकर्मकर्षणात् ॥ ९८ ॥
क्षयंगच्छत्यनशनंस्त्रीणांचैवातिसेवनात् ॥
क्षयाद्भयादाविश्वासाच्छोकास्त्रिदोषदर्शनात्॥९९॥

मनुष्य चिन्ता मैथुनका ध्यान त्यागदे जराकी चिन्तासे वीर्य क्षीण होता है और अतिकर्मसे क्षीणता होती है भोजन न करनेसे और स्त्रीके अति सेवन करनेसे क्षय, भय और अविश्वास तथा शोक त्रिदोष देखने ॥ १०० ॥ १०१ ॥

नारीणामेवसन्नत्वादभिवातादसेवनात् ॥
रूपयौवनमौदार्यलक्षणैर्याविभूषिता ॥ ॥
यावस्याशिक्षितायाचसास्त्रीवृष्यतिमामता ॥ १०० ॥

तथा नारीके समान सुखदायक मानकर अभिघातसे असेवनसे क्षय होता है यौवनसम्पन्न और लक्षणसे विभूषित है, जो स्त्री वशीभूत शिक्षित है वह अपने वशमें होनेसे वाजीकरणके योग्य है ॥ १०० ॥

स्त्रिषुक्षयंमृगयतांवृद्धानांचरितंशताम् ॥
क्षीणजामलपशुक्राणांस्त्रीषुक्षीणाश्चयेनराः ॥ १ ॥

स्त्रीजनोंमें जिसका अल्पवीर्य होगया है क्षीण अल्पवीर्य तथा जो मनुष्य स्त्रीमें क्षीण है ॥ १ ॥

विलासिनामर्थवतांयौवनंवनशालिनाम् ॥
बह्वीनांपतिनान्नृणांयोगावाजिकराहिताः ॥ २ ॥

इतिश्रीनित्यनाथविरचितेकामरत्नेवीर्य्यविवर्द्धनंनामषष्ठोपदेशः ॥

विलायसी अर्थ वा यौवनवाले पुरुष बहुत स्त्रीजनोंके पतिवाले पुरुषोंके वाजीकरणयोग हितकारक हैं ॥ २ ॥

इतिश्रीनित्यनाथविरचितेकामरत्नेवीर्यवर्द्धनंनामषष्ठोपदेशः॥६॥

## अथ गाढीकरणम्, तत्र भक्ष्यनिषेधः ॥

अत्यन्तमूलकटुतिक्तकषायमम्लं
क्षारंचशाकखदिरंलवणाधिकंच ॥
कामीसदैवरतिमान्वनिताभिलाषी
नोभक्षयेदितिसमस्तजनःप्रसिद्धः ॥ १ ॥

अथ वीर्यगाढीकरणम्,तत्र भक्ष्यनिषेध ।

अत्यन्त मूल, कड़वी, कसैली अम्ल, खारी, शाक, खैर अत्यन्त नमकीन वस्तु इतनी वस्तुओंको जो स्त्रीसे रतिकी अभिलाषा करनेवाला पुरुष हो वह सेवन नकरै ॥ १ ॥

प्रौढांगनायानवसूतिकायाश्लथंवरांगंनसुखाययूनाम् ॥
तस्मान्नरैर्भेषजतोविधेयागाढीक्रियामन्मथमन्दिरस्य२ ॥

प्रौढ स्त्री,नवीन प्रसूता स्त्रीका वरांग शिथिल होजानेके कारण युवा पुरुषोंको सुखदायक नहीं होता इस कारण मदनमंदिरका संकोच करना चाहिये ॥ २ ॥

निशाद्वयंपंकजकेशरञ्चनिष्पीड्यदेवद्रुमतुल्यभागम् ॥
अनेनलिप्तंमदनातपत्रंप्रयातिसंकोचमलंयुवत्याः ॥ ३ ॥

दोनों हलदी, कमल, केशर, देवदारु इनको तुल्य भागलेकर योनिमंदिरमें लेप करनेसे संकोच होकर निर्मलता होती है ॥ ३ ॥

सधातकीपुष्पफलत्रिकेणजम्बूत्वचासाररसंघृतेन ॥
लिप्त्वावराङ्गंमधुकेनतुल्यंवृद्धापिकन्येवभवेत्पुरंध्री ॥ ४॥

धायके फूल, हरड, बहेडा, आमला, जामुनकी त्वचा, लोहसार, घृत और मुलहटी इसका लेप करनेसे वृद्धा स्त्रीभी कन्याके समान होती है ॥ ४ ॥

पिकाक्षबीजेनमनोजगेहंविलिप्ययोषानियमंश्चरंति ॥
हठेनगाढंलभतेतदंगंदृष्टंनरैरेषहठेनयोगः ॥ ५ ॥

शिलारस और रुद्राक्षके बीजोंसे काममन्दिरपर लेप करनेसे साक्षात् नियम करनेसे अवश्य मदनमंदिर संकुचित हो जाताहै यह योग श्रेष्ठ है ॥ ५ ॥

मृणालपद्मंपयसासुपिष्यदृढासमंगीगुटिकाविधेया ॥
यस्यावरांगेनिहिताक्षणेनकन्यारमेत्याहसमूलदेवः ॥६॥

कमलको जड़सहित जलसे पीसनेसे और उसकी गुटिका बनाकर जिसके काममन्दिरमें क्षणमात्रको रखदे वह कन्यावत् होजातीहै ऐसा मूलदेवने कहाहै ॥ ६ ॥

इक्ष्वाकुबीजंस्नुहिसारिवेनपिष्ट्वावरांगंपरिलिप्यतेन ॥
नवप्रसूतासिहठेननारीकन्याभवेत्संयमतोनाचित्रम्॥७॥

कडवी तुम्बीके बीज सेहुंड सारिवाके साथ पीसकर योनिपर लेप करनेसे वह स्त्रीका कामभवन कन्याके समान होजाताहै ॥७॥

इन्दीवरव्याघ्रिवचोषणानांतुरंगमारासनयामिनीनाम् ॥
लेपेननार्यास्स्मरसंस्थरध्रंसंकोचयत्याशुहठेनयोगः ॥

नील कमल, कटेरी, वच, कालीमिरच, कनेर, हलदी यह लेप करनेसे तत्काल स्त्रीका काममन्दिर संकुचित होजाताहै ॥ ८ ॥

याशक्रगोपंस्वयमेवपिष्ट्वाविलिंपतिस्त्रीचवरांगदेशम् ॥
आहत्यतस्याःकठिनंचगाढंभवेन्नचक्रांतिविचारचर्या९॥

वीरबहूटीको पीसकर जो स्त्री रतिमंदिरपर लेप करतीहै

उसका मंदिर मनोहर और संकुचित होजाताहै, इसमें आश्चर्य नहीं ॥ ९ ॥

मदनकथनसारैःक्षौद्रतुल्यैर्वरांगंशिथिलितमपियस्याः पूरितंभूयएव ॥ भवतिकठिनमुच्चैःकर्कशंकामिनीना मितिनिगदतियोगंबस्तिदेवोनरेन्द्रः ॥ अश्वगन्धै र्लिपेद्योनिंगाढीकरणमुत्तमम् ॥ १० ॥

॥ इति गाढीकरणम् ॥

मैनफल, कथनसार यह बराबर शहत डालकर जो काममंदिर- में लेप करै तो वह स्थान कर्कश और कठोर होजाताहै यह योग बस्तिदेव नरेन्द्रने कहाहै वा असगंधका योनिपर लेप करै तो गाढी होती है ॥ १० ॥

इति संकोची करणम्.

---

## अथ स्त्रीद्रावणम् ॥

यद्यप्यष्टगुणाधिकोनिगदितःकामोंगनानांसदा नोयातिद्रवतांतथापिझटितिस्त्रीयोषितांसंगमे ॥ तस्माद्भेषजसंप्रयोगविधिनासंक्षेपतोद्रावणम् किंचित्पल्लवयामिनीरजदृशांप्रीत्यापरंकामिनाम्॥११॥

यद्यपि स्त्रियोंको कामदेव आठ गुणा कहाहै तथापि संगममें द्रवीभूत नहीं होतीहै इस कारण संक्षेपसे द्रवीभूत होनेको औषधी कहतेहैं जिसके होनेस कामिनियोंको परमप्रीति प्राप्त होतीहै॥११॥

सिंदूरंचिंचाफलमक्षिकानितुल्यानियस्यामदनातपत्रे ॥ निक्षिप्यतीसांपुरुषप्रसंगात्प्रागेववीर्य्यच्युतिमातनोति १२

सिंदूर, इमलीका फल, शहत यह बराबर लेकर कामध्वजापर लेप करनेसे और स्त्रीसे रति करै तो शीघ्रही स्त्री द्रवीभूत होजातीहै ॥१२॥

व्योषंरजःक्षौद्रसमन्वितंवाक्षिप्तंयदिस्यात्स्मरयंत्रगेहे ॥
द्रुताभवेत्सासहसैवनारीदृष्टस्सदायंकिलयोगराजः॥१३॥

त्रिकुटेका चूर्ण शहतके साथ रतिस्थानमें डालनेसे स्त्री पुरुषके प्रसंगमें बहुत शीघ्र द्रवीभूत हो जाती है यह योगराज देखगयाहै १३

सुपक्वचिंचाफलघोषमूलीगुडंतथामाक्षिकतुल्यभागम् ॥
अमीभिरालिप्यपुनःसुलिंगंबीजंकरोत्याशुनितंबिनीनाम् ॥

पक्के इमलीकेफल, मूली, गुड़, शहत यह सब वस्तु कामध्वजापर लेप कर रतिकरनेसे स्त्री शीघ्र द्रवीभूत होती है ॥ १४ ॥

सटंकणंक्षौद्रमहेशबीजैःकर्पूरतुल्यैरुपालिप्यलिंगम् ॥
शतंनरोयःसविलासिनीनांरतःप्रपातंकुरुतेहठेन ॥१५॥

सठी, कचूर, पीपल, शहत, पारा, कपूर यह ध्वजापर लेपन कर जो पुरुष रति करताहै तो अवश्य स्त्री द्रवीभूत होजाती है१५

पारावतपुरीषंचमधुनासैंधवैर्युतम् ॥
लिंगस्यलेपनात्तेनस्त्रीणांद्रावणमुत्तमम् ॥ १६ ॥

कबूतरकी बीट, शहत, सेंधा यह कामध्वजापर लेपकर रति करनेसे स्त्री द्रवीभूत होजाती है ॥ १६ ॥

गोक्षुरावतयामार्गरसेनलिंगलेपनात् ॥
तत्क्षणाद्द्रवतेनारीपद्मपत्रेयथापयः ॥ १७ ॥

गोखरू अपामार्ग के रसका कामध्वजापर लेप करनेसे उसी क्षण स्त्री ऐसे द्रवीभूत होजाती है जैसे कमलपत्रपर जल ॥ १७ ॥

पिप्पलीचन्दनंचैवबृहतिपक्वांतितिडीम् ॥
एतैर्लिंगप्रलेपेनद्रवेन्नारीनसंशयः ॥ १८ ॥

पीपली, लालचंदन कटेहरी, पक्की इमली इनका ध्वजापर लेप करनेसे स्त्री द्रवीभूत होजाती है इसमें संदेह नहीं ॥ १८ ॥

अगस्तिपत्रद्रवसंयुतेनमध्वाज्यसंमिश्रितटंकणेन ॥
लिप्त्वाध्वजंयोरमतेंगनानांसशुक्रमाकर्षतिशीघ्रमेव॥ १९ ॥

अगस्तके पत्तोंके रसके सहित उसमें मधु घृत और सुहागा मिलाकर जो स्त्रियोंसे रमण करते हैं तो बहुत शीघ्र स्त्री द्रवीभूत होती हैं ॥ १९ ॥

सलोध्रधत्तूरकपिप्पलीनांक्षुद्रोषणक्षौद्रविमिश्रितानाम् ॥
लेपेनलिंगस्यकरोतिरेतःश्च्युतिंविपक्षप्रमदाजनस्य ॥२०॥

लोध धतूरा पीपली कटेहरी पीपल इसमें शहत मिलाकर लेपकर जो रति करताहै उससे स्त्री बहुत शीघ्र द्रवीभूतहोजातीहै २०

तुरगसलिलमध्येभावितंक्षेत्रमाषं
मरिचमधुकतुल्यंपिप्पलींपेषयित्वा ॥
परिरमतिविलिप्यस्वीयलिंगंनरोयः
प्रभवतिवनितानांकामकल्लोलमानः ॥२१॥

असगंधके जलके मध्यमें क्षेत्रमाष ( उडद ) मिरच मुलैठीकी समान पीपलको पीसकर इसको कामपताकापर लेप कर स्त्रीसे विहार करनेसे स्त्री बहुत शीघ्र द्रवीभूत होती है ॥ २१ ॥

बिल्वपुष्पंसुकर्पूरंमुंडीपुष्पंचपेषितम् ॥
लिंगलेपेनरामाणांद्रावंतिरतिसंगमे ॥ २२ ॥

बेलकाफूल कपूर यह मुंडकी पुष्पके साथ पीसकर कामध्वजा पर लेप करनेसे शीघ्र स्त्री द्रवीभूत होती है ॥ २२ ॥

बृहतीफलमूलानिपिप्पल्योमरिचानिच ॥
मधुरोचनयासार्द्धंलिंगलेपेद्रवंतिताः ॥ २३ ॥

कटेहरीके फल और जड़ पीपल काली मिर्च शहत गोरोचन यह मिलाय कामध्वजपर लेपकर रमण करनेसे स्त्री द्रवीभूतहोतीहै २३

क्षौद्रगंधकलेपेनाशिलायुक्तेनतत्फलम् ॥
उपहारपशोरक्तंगृह्णीयादन्तरिक्षतः ॥ २४ ॥

तथा शहत गंधक मनशिलके लेपसेभी कार्य सिद्ध होताहै भेडके पशुका रक्त अन्तारिक्षसे ग्रहणकरै ॥ २४ ॥

तच्छुष्कंचूर्णितंस्थाप्यंपुष्पेरक्ताश्वमारजे ॥
तत्पुष्पंधारयेद्वस्त्रेतर्ज्जन्यंगुष्ठयोगतः ॥ २५ ॥

उसको सुखाय चूर्ण कर लाल कनेरके फूलमें धारण करै तर्जनी ( अँगूठेके निकटकी अँगूली ) और अँगूठे से उसको धारण करै ॥ २५ ॥

आवर्त्यसंमुखेस्त्रीणांदृष्टमात्रेद्रवंतिताः ॥
जम्बीरफलमध्येतुमूलंवृश्चिककंटकम् ॥ २६ ॥

स्त्रीके सन्मुख होतेही वह अवश्य द्रवीभूत होजातीहै जम्भीरी नींबूके बीचमें श्वेतपुनर्नवाकी जड रखकर ॥ २६ ॥

क्षिप्त्वाबध्वास्त्रियैदद्याद्घ्राणमात्रेद्रवन्तिताः ॥
आहरेद्वामजंघांतुटिट्टिभस्यतुदक्षिणैः ॥ २७ ॥

बांधकर स्त्रीको दे तो सूंघनेमात्रसे द्रवित होती है टिट्टिभकी बांईजंघा लाकर उसको शुद्ध करके फिर ॥ २७ ॥

तन्मध्येप्रक्षिपेद्भूर्ज्जपत्रमोंकारलेपितम् ॥
रक्ताश्वमारपुष्पेनमुखंतस्यानिशोधयेत् ॥ २८ ॥

उसके बीचमें ओंकार लिख भोजपत्र डाल चारोंओर लेपन कर रक्खै और लाल कनेरके फूलसे उसका मुख बंद करदे ॥ २८ ॥

कर्णोपरिस्थितंतेनदृष्ट्वास्त्रीद्रवतिध्रुवम् ॥

जलेनलांगलीमूलंपिष्ट्वाहस्तेप्रलेपयेत् ॥ २९ ॥

उसे कानपर रक्खे देखतेही स्त्री द्रवीभूत होजातीहै कलिहारीकी जड़को जलसे पीसकर हाथमें लेप करनेसे ॥ २९ ॥

हस्तेनस्त्रीकरस्पृष्टेद्रवत्यग्नौघृतंयथा ॥ ३० ॥

हाथसे छूतेही इस प्रकार स्त्री द्रवीभूत होजातीहै जैसे अग्निसे घृत ॥ ३० ॥

मरिचकनकबीजैःपिप्पलीलोध्रयुक्तैर्विमलमधुविमिश्रैर्मानवोलिप्तलिंगम् ॥ स्मरतिस्मरविलासेकष्टसाध्यंचनारीसमुचितरतरागांसंविदध्यादवश्यम् ॥ ३१ ॥

कालीमिर्च धतूरेके बीज पीपल लोध यह सब पीस शहतमें मिलाकर कामध्वजपर लेप करनेसे रतियुद्धमें कठिन स्त्रीभी अवश्य पराजित होजातीहै ॥ ३१ ॥

सर्वेषांद्रवयोगानांमंत्रराजाशिवोदितम् ॥
जपेदष्टोत्तरशतंतत्रयोगस्यसिद्धये ॥ ३२ ॥

इन सब द्रवीभूत होनेके योगोंका एक मंत्र शिवजीने कहाहै जिससे यह योग सिद्ध होते हैं इस योगकी सिद्धिके निमित्त एकसौ आठ मंत्र जपना चाहिये ॥ ३२ ॥

ॐनमोभगवतेरुद्रायउड्डामरेस्वण्यद्रावय २
स्त्रीणांमदंपातय २ स्वाहा । ठः । ठः ।

इति द्रावणम् ।

ओंनमो भगवते रुद्राय उड्डामरे स्वण्य द्रावय २ स्त्रीणां मदं पातय २ स्वाहा ठः । ठः ।

इतिद्रावणम् ।

---

## अथलिंगस्थूलीकरणम् । ( दृढीकरणम् )

सकुष्टमातंगबलाबलानांवचाश्वगंधागजापिप्पलीनाम् ॥
तुरंगशत्रोर्नवनीतयोगाल्लेपेनलिंगंमुसलत्वमेति ॥ ३३ ॥

कूट पीपल दोनों खरेटी वच असगंधा गजपीपल कनेर इनका मक्खनके साथ लेप करनेसे ध्वजा मूसलके समान कठोर होती है ॥ ३३ ॥

दिनेदिनेयदाह्येवंसुधीःकुर्य्यात्प्रयत्नतः ॥
तदास्थूलंभवेल्लिंगंनिश्चितंनात्रसंशयः ॥ ३४ ॥

जो बुद्धिमान् दिन दिन यत्न पूर्वक यह प्रयोग करता है तब उसकी ध्वजा स्थूल होजाती है इसमें सन्देह नहीं ॥ ३४ ॥

सलोध्रकाश्मीरतुरङ्गगंधामातंगगंधापरिपाचितेन॥तैले
नवृद्धिंखलुयातिलिङ्गंवरांगनालोकमनोहरन्तत् ॥३५॥

लोध केशर असगंध पीपल शालपर्णी तेलमें इनको पकाकर लेप करनेसे ध्वजाकी वृद्धि होती है जो स्त्रीजनोंको मनोहरहै॥३५॥

भल्लातकास्थिजलशूकमथाश्वपत्र
मंतर्विदाह्यमतिमान्सहसैंधवेन ॥
एतद्विरूढबृहतीफलतोयपिष्ट
मालेपनम्माहिषविद्धिमलीकृतेङ्गे ॥
स्थूलंमहत्तरतुरंगमतुल्यमाशु
शेफःकरोत्यभिमतंनहिसंशयोस्ति ॥
सूतकंमरिचंकुष्ठंनागरंकंटकारिका ॥
अश्वगंधातिलंक्षौद्रंसैन्धवंश्वेतसर्षपाः ॥ ३६ ॥

भिलावेंकी मींगी शेवाल इन दोनोंको जलाकर सेंधानिमक मिलाय और बडी कटेहरीके साथ जलसे पीस करके आलेपन करै तो महिष की सदृशध्वजा होती है और तुरंगके समान ध्वजा होजाती है और दृढ होतीहै इसमें सन्देह नहीं पारा काली मिर्च कूठ सोंठ कटेहरी असगंध तिल शहत सेंधा श्वेतसरसों ॥ ३६ ॥

अपामार्गोयवामाषाःपिप्पलीपेषयेज्जलैः ॥
लेपोयंकुरुतेवृद्धिंलिंगस्यदृढतांध्रुवम् ॥ ३७ ॥

त्रिरचिटा जौ उडद पीपल इनको जलके साथ पीसकर लेप करनेसे ध्वजाकी वृद्धि और दृढता होती है ॥ ३७॥

मासमात्रंसदालिख्वामर्दयेच्चदिवानिशम् ॥
वराहवसयालिंगंमधुनासहलेपयेत् ॥ ३८ ॥

एक महीने इसका लेप और मालिश करनेसे तथा शूकरकी चरबी शहत से लेपन करनेसे ॥ ३८ ॥

स्तनंलिंगंकर्षपाणिवर्द्धनंभक्षणादिकम् ॥
टंकणंचमहाराष्ट्रीजम्बूशूकरतैलकम् ॥ ३९ ॥

दृढता होती है और यही स्तनवृद्धिकाभी करने वाला है तथा सुहागा जल पीपल शूकरका तेल ॥ ३९ ॥

मधुनासहलेपेनलिंगस्यान्मुसलोपमम् ॥
महिषीनवनीतंचमुशलीचूर्णमिश्रितम् ॥ ४० ॥

यह शहतके साथ लेपन करनेसे मूसलके समान होजाती है भैंसका मक्खन मूशलीका चूर्ण मिलाकर ॥ ४० ॥

धान्यराशिस्थितंभाण्डेसप्ताहाच्चसमुद्धरेत् ॥
तेनप्रलेपयेल्लिंगंमासैकाद्वर्द्धतेध्रुवम् ॥ ४१ ॥

धान्योंके साथ बर्तनमें रखकर सात दिनमें उघारकर उसको लींगपर लेप करनेसे एकमहीनेमें अवश्य ध्वजाकी वृद्धि होती है४१

मुशलीशीतलाभक्ष्यालिंगवृद्धिकरीमता ॥
मारणोत्थंकृमिंचैवकंटकारीफलंजलैः ॥ ४२ ॥

मुशली आरामशीतला खानेसे लिंगकी वृद्धि करनेवाली है धवूरा लाख कृमिकटेहरीके फल जलसे पीसकर ॥ ४२ ॥

पिष्ट्वालिंगंप्रलेपेनस्थूलंभवतिनिश्चितम् ॥
तद्वच्चमुशलीसाज्यालेपाल्लिंगस्यदार्ढ्यकृत् ॥ ४३ ॥

लेप करनेसे कामध्वजा अवश्य स्थूल होजाती है इसी प्रकार मुशली घृतका लेप ध्वजाको दृढ करता है ॥ ४३ ॥

पिप्पलीलवणंक्षीरंसितालेपापिदीर्घकृत् ॥
मांसीवाक्षफलंकुष्ठमश्वगंधाशतावरी ॥ ४४ ॥

पीपल सेंधालवण दूध मिश्रीके लेप करनेसे ध्वजा दृढ होती है ॥ ४४ ॥

तैलेपक्त्वाप्रलेपेनलिंगस्थौल्यकरंध्रुवम् ॥
रोहितामत्स्यपित्तन्तुजलौकालांगलीसह ॥ ४५ ॥
अनेनमर्दयेल्लिंगंवर्द्धतेमुसलोपमम् ॥
सूतकोह्यश्वगंधाचरजनीगजपिप्पली ॥ ४६ ॥

अथवा जटामांसी बहेडा कूठ असगंध शतावरी तेलमें पकाकर लेप करनेसे ध्वजा स्थूल होजाती है इसमें सन्देह नहीं रोह-मछलीका पित्ता जोंक और कलिहारीके साथ ध्वजकी जडमें मर्दन करनेसे मूसलकी समान वृद्धि को प्राप्त होती है पारा असगंध हलदी गजपीपल ॥४५॥४६॥

सितायुक्तंजलैःपिष्ट्वामासैकंलेपयेत्तदा ॥
अद्भुतम्वर्द्धयेल्लिंगंयोगिकर्णस्तनानिच ॥ ४७ ॥

---

१ वमनोत्थवा पाठः ।

मिश्री यह सब वस्तु जलके साथ पीसकर एक महीने पर्यन्त लेप करनेसे ध्वजा अद्भुत प्रकार से बढती है जैसे योगीके कान और स्तन बढते है ॥ ४७ ॥

योमर्कटीमूलमजाप्रलेपेव्यालुप्तकेशःशयनेनिशायाम् ॥
पिष्ट्वाध्वजंलिम्पतितस्यकामंभवेदयोदंडमिवक्षणेन ॥४८॥

जौ कौंचकी जड़को अजा औषधीके साथ पीसकर शयनके समय रात्रिमें लेप करता है उसकी मदनध्वज लोहदण्डके समान हो जाती है ॥ ४८ ।

हयाविपत्नीनवनीतमध्येवचाबलाभागरसामयैश्च ॥
लेपेनलिंगंसहसैवपुंसांलोहोपमंस्यादितिदृष्टमेतत् ॥४९॥

जो मनुष्य भैंसके मक्खनमें बच खिरैंटी और पारा मिलाय लेपन करे तो तत्काल यह लेप करनेसे मदनध्वज लोहदण्डके समान होजाती है यह देखाहुआ योग है ॥ ४९ ॥

कृष्णापराजितामूलंग्राह्यंखदिरकीलकैः ॥
कृष्णसूत्रैःकटिबद्धाऊर्द्धलिंगंकरोतिच ॥ ५० ॥

कृष्ण विष्णुकान्ताकी जड़ खदिरकी कीलकसे ग्रहणकर काले तागेसे कमरमें बांधे तो रतिध्वजको दृढ करती है ॥ ५० ॥

देवदालीरसंधात्रीक्षीरपानास्थिरोध्वजः॥
इत्येवंसर्वयोगानांमंत्रराजंशिवोदितम् ॥ ५१ ॥
अनेनमंत्रितंकृत्वामासैकंलेपयेत्ततः ॥
ॐनमोभगवतेउड्डामहेश्वरायसवरप्रसवरकुरुर
स्वाहाठःठःदृढीकरणंतुबिनामंत्रेणकार्य्यम् ॥

वन्दालीकारस आमला और दूधपानसे ध्वजा स्थिर होती है इस प्रकार इन सबयोगोंमें शिवजीका कहाहुआ मंत्रराज है इस

मंत्रसे अभिमंत्रितकर एक मासपर्यन्त लेपनकरै ॥ ५१ ॥

ओंनमो भगवते उड्डामहेश्वराय सब सब प्रसव प्रसव कुरु कुरु स्वाहा ठःठः दृढीकरना विना मंत्रकेही करे ॥

इति लिंगस्थूलीकरणम् । ( दृढीकरणम् )

---

## अथस्तनवर्द्धनं स्तनोत्थापनंच ॥

मातङ्गकृष्णामथवाजगंधावचायुतापर्युषिताम्बुमिश्रा ॥
हयाविपत्नीनवनीतयोगात्कुर्वन्तिपीनेकुचकुम्भयुग्मम् ५२
तैलम्वचादाडिमकल्कसिद्धंसिद्धार्थजंलेपनतोनितान्तम् ॥
नारीकुचौचारुतरौचपीनौकुर्य्यादसौयोगवरःप्रदिष्टः॥५३॥

अथ स्तनवर्धन उत्थापनकरना ।

पीपल कालीमिर्चे असगंध बचा इन सबको मिलाकर भैंसके मक्खनके साथ कुचोंमें लगानेसे शीघ्र दोनोंस्तनोंको कुम्भके समान दृढकरते हैं वच दाडिम इन को सरसोंके तेलमें पकाय इनका लेप करनेसे स्त्रीकेस्तन अत्यन्त सुन्दर पुष्ट यह प्रयोग करता है ॥५२॥५३॥

श्रीपर्णिकायारसकन्तुसिद्धंतिलोद्भवंतैलवरंप्रदिष्टः ॥
चूर्णेनवक्षोजयुगेप्रदेयंप्रयातिवृद्धिंपतितेपिनार्य्याः ॥५४

श्रीपर्णी ( कम्भारी) के रसमें सिद्धकर तेल बनाले इसको दोनों उरोजपर लगानेसे गिरेहुए भी स्त्रीके कुच उठि आतेहैं ॥ ५४ ॥

प्रथमकुसुमकालेनस्ययोगेनपीतं
सनियममथवास्यात्तंदुलांभोयुवत्याः ॥
कुचयुगलसपीनंक्कापिनोयातिपातं
कथितइतिपुरैवंचक्रदत्तेनयोगः ॥ ५५ ॥

प्रथम कुश और महाकाल औषधी योगसे नियमपूर्वक पान करनेसे अथवा चावलोंका जल सेवन करनेसे जो किसीप्रकारसे भी कुच पुष्ट न हों तो इस्से होजातेहैं यह योग चक्रदत्तने कहाहै ॥ ५५ ॥

शालितंदुलोदककर्षमात्रंवामदक्षिणनासाभ्यां
नस्यंदेयं॥मुंडीचूर्णंदशपलंतोयैश्चातुर्गुणैःपचेत् ॥
अर्द्धशेषंहरेत्क्वाथंक्वाथार्द्धंतिलतैलकम् ॥ ५६ ॥

शालितंदुलका जल एक कर्ष बांई दाहिनी नासिकाके छिद्रसे नास लेनेसे और दशपल मुण्डीका चूर्ण लेकर उसे चौगुने जलमें पकावे जब आधा रहजाय तब इसमें तिलका तेल डालदे ॥५६॥

तैलशेषंपचेत्तेननस्यंपानंचकारयेत् ॥
पतितंयौवनंस्त्रीणांमासादुत्तिष्ठतेध्रुवम् ॥ ५७ ॥

जब क्वाथमात्र जलजाय तेलमात्र रहजाय तब उसको नस्य और पानके काममें लावे, इससे गिरेहुए स्त्रीके कुच फिर उठि आतेहैं५७

श्यामानिशाबलालाजालवणंक्वाथयेत्समम् ॥
तोयेचतुर्गुणंपाच्यंपादशेषंसमाहरेत् ॥ ५८ ॥

प्रियंगु हलदी खिरेंटी खील सेंधा इनका क्वाथ करके चौगुने पानीमें पकावे जब चौथाई रहजाय ॥ ५८ ॥

तिलतैलंक्वाथपादंतैलार्द्धंमहिषीघृतम् ॥
स्नेहशेषंपचेत्तैलंनस्येनमासमात्रतः ॥ ५९ ॥

तिलका तेल उसमें डालकर क्वाथ करै तेलसे आधा भैंसका घी ले और जब रस जल जाय तेलमात्र रहजाय तब एक मासेभर नस्य लेय ॥ ५९ ॥

बालास्त्रीवृद्धनारीणांयौवनंकुरुतेद्भुतम् ॥ ६० ॥

तौ बाला स्त्री और वृद्ध स्त्रियोंके योवन अद्भुत होजातेहैं ॥६०॥

एरण्डतैलंशकुलस्यतैलंतथामाबिल्वस्यरसंगृहीत्वा ॥
संमर्दयेदूर्ध्वग्रहहस्तकेनतदास्तनंस्यात्पतितंनचैवम् ६१

एरण्डकातेल शीलमत्स्यका तेल और बेलकारस ग्रहणकरके यह तेल कुचौंपर मर्दन करने से नवीन होजातेहैं ॥ ६१ ॥

श्रीपर्णीरसकर्कांभ्यांतैलंसिद्धंतिलोद्भवम् ॥
तत्तैलंतिलकेनापिस्तनस्योपरिदापयेत् ॥६२॥

श्रीपर्णी ( गंभारी ) का रस कर्कट वृक्ष और तिलकातेल लेकर पकावै और उसे स्तनपर लगावै ॥ ६२ ॥

काठिन्यांवृद्धतांयातिपतितांचोत्थिताम्भवेत् ॥
वृद्धावाकन्यकावापिपातौयस्याःपयोधरौ ॥ ६३ ॥

तौ स्तन कठिन और वृद्धिको प्राप्त होतेहैं और पतित हुए उठि आते हैं, जिस वृद्ध वा कन्याके पयोधर पतित होजांय वह ॥ ६३ ॥

श्वेतोद्भस्यकुसुमंकृष्णधेनुपयसिनित्यंपिष्टास्तनयुगेदे
याभवेत्पीनपयोधरा ॥ ६४ ॥

श्वेत मोथे के फूल काली गौके दूधमें पीसकर दोनों स्तनोंपर लेप करनेसे पुष्ट होजाते हैं ॥ ६४ ॥

वचाश्वगन्धासंयुक्ताअश्वारिपत्रकंतथा ॥ गजपिप्प
लिकायुक्तंसंघोभिन्नजलेनच ॥ पेषयित्वाविधानेनले
पयेत्स्तनमण्डले ॥ ६५ ॥

वच असगन्ध असगंधके पत्ते गजपीपलके सहित जलसे पीसकर स्तनमण्डलमें लेप करनेसे ॥ ६५ ॥

नयतेतुकदाचिद्वैताम्रतालफलंतथा ॥
गांमरिपत्ररसश्चैवतत्समंतिलतैलकम् ॥ ६६ ॥

समानंजलभागंचदत्वापाकंसमाचरेत् ॥
तैलशेषंपरिज्ञायवस्त्रेणशोधयेत्कुचौ ॥ ६७ ॥
दिवाप्रलेपनादेवलौहत्वंजायतेचिरात् ॥ ६८ ॥
इति स्तनवर्द्धनं स्तनोत्थापनञ्च ।

स्तन आम्रफलके समान उन्नत होजातेहैं गंभारीके पत्र कारस तिलकातेल इनकी बराबर जलदेकर पाक करे जब तेलमात्र शेष रहजाय तब स्तनपर लेप करनेसे स्तन लोहकी समान कठोर होजाते हैं ॥ ६६ ॥ ६७ ॥ ६८ ॥

## अथ योनिसंस्कारः ।

प्रक्षालयेन्निम्बकषायतोयैर्निशाज्यकृष्णागुरुगुग्गुलानाम्॥
धूपेनयोनिंनिशिधूपयित्वानारीप्रमोदंविदधातिभर्तुः ६९
नीमके काढेसे योनिको धोना चाहिये अथवा नीम हलदी घृत कालाअगुरु गूगल इनकी धूप योनिमें देनेसे स्त्री प्रमोदको प्राप्त होतीहै ॥ ६९ ॥

प्रक्षाल्यनिम्बस्यजलेनभूयस्तस्यैववल्केनविलेपयेच्च ॥
त्यजेयुरत्याश्चिरकालभूतंगंधम्वरांगस्यनसंशयोत्र७०॥
इति योनिसंस्कारः ।

फिर नीमके जलसे प्रक्षालन करके और नीमके छालका लेप करनेसे चिरकाल योनिकी दुर्गन्ध नष्टहोतीहै इसमें सन्देह नहीं७०॥

## अथ लोमशातनविधि ।

पलाशभस्मान्विततालचूर्णैरम्भांबुमिश्रैरुपलिप्यभूयः॥
कन्दर्पगेहंमृगलोचनानांरोमाणिरोहंतिकदापिनैव ७१॥
छाकको भस्म हरतालकी भस्म यह दोनों जलसे पीस लेप करनेसे स्त्रियोंके मदनमंदिरके रोम कदाचित्भी नहीं जमतेहैं ॥ ७१ ॥

एकःप्रदेयोहरितालभागःपंचप्रदेयोजलजस्यभागः॥
सवस्तरोर्भस्मनएवपंचप्रोक्ताश्चभागाःकदलीजलार्द्राः॥

हरिताल एकभाग शंखकी भस्म पांचभाग वसतरुकी भस्म पांच भाग यह केलेके जलमें सानकर पात्रमें सात दिन लेप करनेसे मदन स्थानमें कभी रोम नहीं जमतेहैं ॥ ७२ ॥

संसिद्धपात्रेषुसप्ताहमित्थंकृत्वास्मरागारविलेपनंच ॥
रोमाणिसर्वाणिविलासिनीनांपुनर्नरोहंतिकदाचिदेव ७३
रम्भाजलेसप्तदिनंविभाव्यभस्मानिकम्बोर्मसृणानिपश्चात्
नलेनयुक्तानिविलेपनेनरोमाणिनिर्मूलयतिक्षणेन ॥ ७४ ॥

केलेके जलमें सात दिनतक शंखकी भस्मसे भावना दे और नल तृणसे युक्त लेप करनेसे फिर कभी नहीं जमते और क्षण मात्रमें निर्मूल होजातेहैं ॥ ७३ ॥ ७४ ॥

तालकंशंखचूर्णन्तुमंजिष्ठाभस्मकिंशुकम् ॥
समभागप्रलेपेनरोमखंडनमुत्तमम् ॥ ७५ ॥

हरताल शंखचूर्ण मजीठ टेसूकी भस्म इनको समान भाग लेकर लेप करनेसे रोम दूर होजातेहैं ॥ ७५ ॥

तालकंगंधचूर्णंतुपिष्ट्वाचक्षारतोयकैः ॥
तेनलिप्त्वाकचाघर्मेस्थितेगच्छन्तितत्क्षणात् ॥ ७६

हरताल गंधकका चूर्ण पीसकर क्षार जलके साथ लेपकर धूपमें स्थित होनेसे बाल उखड़ जातेहैं ॥ ७६ ॥

पूगवृक्षस्यपत्रोत्थद्रवैःपिष्ट्वातुगंधकम् ॥
तेनलिप्त्वास्थितेघर्मेरोमखण्डनमुत्तमम् ॥ ७७ ॥

सुपारीके पेडके पत्तों के रसमें गंधक पीसकर लेपकर धूपमें स्थित होनेसे रोम उड जाते हैं ॥ ७७ ॥

नराणांखण्डकेशानांछुच्छुन्दर्य्याश्चतैलतः ॥
ननिर्यान्तिपुनर्ल्लेपात्रिसप्ताहेकृतेसति ॥ ७८ ॥

जिनके खण्डकेश होगये हो छछूंदर के तेलका लेप करनेसे तीन सप्ताहतक लगानेसे बाल नहीं जमते हैं ॥ ७८ ॥

कुसुंभतैलतप्तानांसप्तवारंतथागुणम् ॥
सद्योजातस्यमाहिषीवत्सस्यमलमाहरेत् ॥ ७९ ॥

तथा तपाकर कुसुम्भके तेलको तप्तकरके लगानेसेभी यही गुणहै तत्कालमें उत्पन्न हुए भैंसके बच्चेका गोबर लावे ॥ ७९ ॥

तल्लिप्त्वावेष्टयेद्रात्रौकेशान्वातारिपात्रतः ॥
प्रातस्तप्तोदकैःक्षाल्याःपतंत्यामूलतोत्थिताः ८० ॥

रात्रिमें इसको बालोंपर एरण्डके पत्तेमें लगाय लेप करै फिर गरम पानीसे धोनेसे बाल जड़से गिरजातेहैं ॥ ८० ॥

पिपीलिकानांकृष्णानांस्थूलानांभूगृहंहरेत् ॥
छायाशुष्कंच तच्चूर्णंपंचाहंलेपयेत्सदा ॥ ८१ ॥

बड़ीकाली चैंटीके रहनेके स्थानकी मट्टी लाय छायामें सुखावै उसका चूर्ण करले फिर पांचदिन लेप करै ॥ ८१ ॥

पूर्ववत्खण्डकेशानां न पुनारोहणंभवेत् ॥
शंखतालंयवंगुञ्जांकांजिकैःपेषयेत्सदा ॥ ८२ ॥

तौ पूर्व में खण्डहुए बाल फिर नहीं जमते हैं शंखकी भस्म हरताल इन्द्रजौ गुंजा यह कांजी के साथ सदापीसै ॥ ८२ ॥

लेपात्पतंतिरोमाणिपक्वपत्रमिवद्रुमात् ॥
लेपनाद्धन्तिकेशांश्चकटुतैलैर्मनाशिला ॥ ८३ ॥

उसके लेपसे रोम ऐसे गिरजातेहैं जैसे वृक्ष से पक्के फल तथा

बालोंपर कडवातेल और मनशिलाका लेप करनेसे बाल गिरजाते हैं ॥ ८३ ॥

इति लोमशातनम् ॥

इति श्रीनित्यनाथविरचिते कामरत्ने गाढीकरणादिलोमशातनंनाम सप्तमोपदेशः ॥ ७ ॥

---

## अथषंढीकारणं-

तत्साम्यंच ॥

नरोमूत्रयतेयत्रकृष्णंतत्रतुवृश्चिकम् ॥
निखन्याज्जायतेषंढंउद्धृतेतुपुनःसुखी ॥ १ ॥

अथ षंढी ( नपुंसक ) करणम् और तिसका प्रतिहार । जहां मनुष्य मूत्र करता है वहां काला बिच्छू गाडदेनेसे नपुंसक होजाता है. फिर उखाड़नेसे सुखी होता है ॥ १ ॥

अजामूत्रेणसंभाव्यंनिशिषड्बिन्दुचूर्णितम् ॥
खानपानप्रयोगेणषंढत्वंजायतेनृणाम् ॥ २ ॥

बकरीके मूत्रमें भावना देकर रात्रिमें षड्बिन्दुका चूर्ण कर खान पानमें प्रयोग करनेसे मनुष्यको नपुंसकता होतीहै ॥ २ ॥

तिलगोक्षुरयोश्चूर्णंछागदुग्धेनपाचितम् ॥
शीतलंमधुनायुक्तंपिबेत्षंढत्वशांतये ॥ ३ ॥

तिल गोखरूका चूर्ण बकरीके दूधमें पकाय शीतलकर शहतके साथ पियो तो षंढ़पन शान्त होजाता है ॥ ३ ॥

जलौकादुग्धचूर्णन्तुनवनीतेनभक्षितम् ॥
यावज्जीवंनसन्देहःषंढत्वमाप्नुयान्नरः ॥ ४ ॥

जलौका और कतृणका चूर्ण मक्खनके साथ भक्षण करनेसे मनुष्य जीवपर्यन्त षंढ़ होजाता है इसमें सन्देह नहीं ॥ ४ ॥

धत्तूरपुष्पभक्षेणपुनःसंपद्यतेसुखम् ॥

फिर धतूरेके फूलोंके भक्षण करनेसे सुखी होता है ॥ ५ ॥

योगोविषाणम्पतितंचघृष्ट्वालिंपेद्रतौस्वस्यमनोभवास्त्रे ॥
एकांतकंतत्कुरुतेन्यपत्न्यानोत्तिष्ठतेतामपहायपत्नीम् ६॥

गिरेहुए गोके सींगको घिसकर रतिकरनेके समय कामास्त्रपर लेप करनेसे फिर वह स्त्री उसे छोड़कर कभी रति नहीं करती है ॥ ६ ॥

अत्युन्नतंचापरगोविषाणंघृष्ट्वापुनस्तेनविलिप्यलिङ्गम्॥
प्रयातिभूयःप्रकृतंतदंगंदृष्टोनरैरेषसदाप्रयोगः ॥ ७ ॥

फिर दूसरे उससे बड़े सींगको घिसकर काम अस्त्रपर लेप करनेसे फिर अपनी प्रकृतिको प्राप्त होता है यह प्रयोग देखा हुआ है॥७॥

निशाविचूर्णघनसारचूर्णसमीकृतम्भस्तपयोवियुक्तम् ॥
भक्तंनिपीतंकुरुतेनिकामंनरस्यषंढत्वमितिप्रसिद्धम् ८॥

हलदीका चूर्ण कपूरका चूर्ण यह सब समान भाग लेकर दूध से पान करने मनुष्य को षंढ अर्थात् हीजकर देता है, इसमें सन्देह नहीं ॥ ८ ॥

तिलस्यदंडाविटपस्यचूर्णप्रसाधिरंभापयसोर्द्धमासम् ॥
सपाचितंशर्करयान्वितंचपीत्वाहरेत्षढकतामयस्य ॥

तिलमें नागबलाका चूर्ण करके केलेके रसमें भावितकरे यह आधे महीनेतक शरकरा साथ पीनेसें षंढपन दूर होजाता है॥९॥

इति षंढकरणंतत्साम्यश्च ॥

---

## अथयोनिबंधनंमोक्षणंच ॥

पूर्वोत्थंलांगलीमूलंवामपादस्यपांशुकम् ॥
एकत्रकारयेद्धीमान्द्वयेनशुक्तिसंपुटे ॥ १० ॥

पूर्वमें उगी हुई लांगली की जड़को और वामचरण की धूरिको एकत्र कर बुद्धिमान् इन दोनोंसे दो सीपीको लेपित करै ॥ १० ॥

लेपयेद्भगबंधस्यात्तक्रैःप्रक्षाल्यमुच्यते ॥
श्मशानचैलमादायवामपादस्यपांशुकम् ॥ ११ ॥

इसके लेप करनेसे योनि बंधन होतीहै फिर मट्ठेसे प्रक्षालन करनेसे छूटतीहै श्मशानमेंसे वस्त्र लावै उसमें वामचरणके नीचे की धूरि मिलाकर ॥ ११ ॥

संध्यायांबंधयेत्तेनपोटलीभगबंधनीम् ॥
ॐअमुकीभगबध्नामिविस्फुररंध्रशोणितम् ॥ १२ ॥

संध्याके समय पोटली बांधनेसे योनिका बन्धन होताहै " अमुकी भगबध्नामि विस्फुरं रन्ध्रशोणितम् " इत्यादि ऊपर लिखा मंत्र पढै कि ॥ १२ ॥

मयाकृतंभगबंधनास्तिलोकचिकित्सकाः ॥
पतिर्वापतिमंत्रोवायेचान्येभगमर्द्दकाः ॥
सर्वेवैविमुखंयांतिवर्जयेत्कामुकैस्तथा ॥ १३ ॥

मैंने अमुक स्त्रीकी योनिबंधन कीहै इससे रन्ध शोणित स्फुरना रहित होगा इस मेरे किये बंधनका लोकमें कोई चिकित्सा करनेवाला नहीं है, पार्वतीपतिके मंत्र वा और भगमर्दक चिकित्सा आदि ये सम्पूर्ण विमुख होजांयगे, इसकारण कामुक इसमें मौन हैं ॥ १३ ॥

ॐचिठिचिठिखचिटिखचिटिठःठःप्रयोगद्वयस्या
यंमंत्रः॥वचैलांचंदनंक्षीरैःप्रक्षाल्यामर्दयेद्भगम् ॥
यंत्रमंत्रादितंत्रेणयत्किंचिच्छत्रुणाकृतम् ॥ १४ ॥

"ॐ चिठिचिठि खचिटि २ ठःठः" दोनों प्रयोगका यह मंत्र है॥ वच इलायची चन्दन इनको पीस दूधमें मिलाय योनिको मर्दन करै तो यंत्र मंत्र तंत्र जो कुछ शत्रुने किया है ॥ १४ ॥

तत्तस्यैवभवेद्येनसिद्धिमंत्रस्सउच्यते ॥
सप्ताभिर्मंत्रितंतोयंशुद्धम्पूतंपिबेत्तुयः ॥
तस्यशत्रुकृतोदोषइशत्रुवेश्मभविष्यति ॥ १५ ॥

वह सब इस सिद्ध प्रयोगको मंत्र सहित करनेसे दूर होता है, सात वार मंत्रको अभिमंत्रित कर जो जल पियै उसके शत्रुका किया दोष शत्रुकेही मंदिरमें होगा ॥ १५ ॥

ॐवज्रमुष्टिवज्रकीबाडीवज्रबाँधौदशद्वार ॥
वज्रपाणीपिबेच्चांगेडाकिनीडापिनीरक्षौवसर्वांगेमं
त्रजयोशत्रुभयौडाकिनीवावोंजानुवायौकालिकालि
शामनतेंब्रह्माकीधीशुसाशुडाकिनीमिलिकरिवरेयो
मोरोजीडुभातेकरेतीपत्नेपानीकरेगुआकरेयानेकरे
सूतेकरेपरिहासेकरेनयनकटाक्षिकरेआपोनहाथेपर
हाथेजियतिसंचारेकिलनीपोतनीअनिन्तुषवरीकरेए
तेविज्ञानअहिननगेयोमोहिकरेत्साराकुठितित्स्केम
सरूपद्रे ॥

ॐमोक्षिद्धिगुरूरपायस्वीलिंगमहादेवकीआज्ञा ॥
एलाफलंवासवगोपचूर्णंगुप्तंक्षिपेद्योषिदुपस्थमार्गे ॥
तस्यैवलिंगस्यवरप्रवेशंस्यात्तत्रनान्यस्यकदाचिदेव १६

"ॐवज्र मुष्टि वज्रकि वाड़ी वज्रबांधौंदश द्वार वज्र पाणी पिवित् चांगे डाकिनी डापिनी रक्षोव सर्वांगे मंत्रज यो शत्रु भयो डापिनी वावों जानुवायो कालिका लिश मनते ब्रह्माकेधीशु साशु डाकिनी मिलि करिवरे योमी रोजी डुभातेकरेती पत्नेपानी करे गुजकरे यानेकरे सूतकरे परिहासेकरे नयन कटाक्षिकरे आपोन हाथेपर हाथे जयति संचारे किलनी पोतनी अनितु षवरी करे एंत विज्ञान

अहिननगे योमोहि करे त्साराकुठि तित्स्के मसरूपद्दे ॐ मोसिद्धि गुरूरयाय" स्वीलिगंमहादेवकीआज्ञा ॥

पूर्वी इलायची इन्द्रगोपका चूर्ण जो स्त्रीके मदनमंदिरमें गुप्त डालदे तौ उससे वह डालने वाला पुरुष ही रति कर सकता है अन्य नहीं ॥ १६ ॥

गव्येनदध्नामथितंविधायप्रक्षालयेत्तेनतदंगमुच्चैः ॥
भवेद्दरांगंप्रकृतंयुवत्याइत्याहकर्त्ताहरमेखलायाः॥१७॥

फिर गौके दहीको मथकर उससे कामसदन प्रक्षालन करनेसे फिर पूर्ववत् होजाताहै यह वचन हरमेखलाके कर्ताने कहाहै॥१७॥

आकाशदेशेपतितंगृहीत्वायोषिन्नखंदन्तमलंसुपिष्ट्वा ॥
लिप्त्वाध्वजंतेनरमेत्ततोयातस्याविनाशःपुरुषांतरेण॥१८

आकाश देशमें गिरेहुए स्त्रीके नख दांतके मैलको ग्रहण कर फिर पीसकर कामध्वजापर लेप करै तो उसको पुरुषान्तरकी इच्छा नहीं होती ॥ १८ ॥

निर्घातलोहस्यजलेनभूयःप्रक्षालनंकामगृहस्यकुर्य्यात् ॥
पुनःसमासादयतिप्रहृष्टंनारीतदंगंखलुपूर्वरूपम् ॥ १९ ॥

फिर बिना निर्घात लोहके जलसे कामस्थानका प्रक्षालन करे तो पतिसंभोगमें स्त्री पूर्ववत् प्राप्त होतीहै इसमें सन्देह नहीं ॥ १९ ॥

मुहुर्मुहुर्यामथितेननारीप्रक्षालयेत्सप्तदिनानियत्नात् ॥
तस्यास्तदंगंपुनरेवभूयात्पूर्वानुरूपांनहिसंशयोस्ति॥२०

इति भगबंधनं तस्यमोक्षणंच ॥

और बारंबार जो स्त्री मथन किये इन प्रयोगों से गुप्त स्थान सात दिनतक प्रक्षालन करै तो उसका गुह्यस्थान पूर्ववत् होजाताहै इसमें सन्देह नहीं ॥ २० ॥

इति योनिबंधनं तस्य मोक्षणंच ॥

## अथ नष्टपुष्पायाःपुष्पकरणम् ॥

ज्योतिष्मतीकोमलपत्रमग्नौभृष्टंयवायाःकुसुमंचपिष्टम् ॥
गृह्णाम्बुनापीतमिदंयुवत्याःकरोतिपुष्पंस्मरमंदिरस्य २१

ज्योतिष्मती ( मालकांगनी ) कमलपत्र अग्निमें भुने जो और फूल पीसकर जो स्त्री पान करतीहै उसका नष्टरज फिर प्रवर्तित होता है ॥ २१ ॥

लांगलीकन्दचूर्णवामूलंवापामार्गजम् ॥
इन्द्रवारुणिकामूलंयोनिस्थंपुष्पबंधनुत् ॥ २२ ॥

कलिहारी औषधीके कन्दका चूर्ण वा चिरचिटेकी जड़ वा इन्द्रावणकी जड़ योनिमें रखनेसे रजका बंधन छूटजाता है ॥२२ ॥

पारावतपुरीषंचमधुनासंपिबेत्तुयः॥
रजस्वलाभवेन्नारीमूलदेवेनभाषितम् ॥ २३ ॥

कबूतर की वीट जो शहतमें मिलाकर पीवे वह स्त्री आवश्य रजस्वला होतीहै ऐसा मूलदेवने कहाहै ॥ २३ ॥

तिलमूलकषायन्तुब्रह्मदंडीयमूलकम् ॥
यष्टीत्रिकटुकंचूर्णक्काथयुक्तंचपाययेत् ॥ २४

तिलके मूलका काढ़ा वा ब्रह्मदंडीकी जड़ मुलैठी त्रिकुटा इनका चूर्ण वा क्काथ करके जो पानकरै ॥ २४ ॥

पुष्परोधेरक्तगुल्मेस्त्रीणांसद्यःप्रशस्यते ॥
तिलक्काथेगुडंव्यूषंतिलभागयुतंपिबेत् ॥
क्काथंरक्तभवेगुल्मेनष्टपुष्पेचयोजयेत् ॥ २५ ॥

तो रतका रोध योनिकी ग्रंथि यह शीघ्र नष्ट होजाती है तिल के क्काथमें गुड़ सोंठ मिर्च पीपल तिलके भागके साथ पीवेतो अर्थात् क्काथ बनाय गुल्म नष्टपुष्प सब दूर होजातेहैं ॥ २५ ॥

दूर्वादलंतन्दुलतुल्यभागंनिःपिष्यपिष्टंपरिपाचितञ्च ॥
तद्भक्षयित्वावनिताप्रनष्टंपुष्पंलभेतस्वबलानुरूपम् ॥२६॥

इतिनष्टपुष्पायाःपुष्पकरणम् ॥

अथवा दूवार्दल और चावल बराबर पीसकर पकावै उसे खाने से स्त्री रजोवती होतीहै ॥ २६ ॥

इति रजस्वलाकरणम् ॥

---

## अथगर्भस्त्रावणम् ॥

### तत्रानभिनवगर्भस्त्रावणम् ॥

कुतेजारेक्षिपेद्योनौतिलतैलात्कसैंधवम् ॥
द्रवतेतत्क्षणादेवशुक्रपुष्पंस्रवत्वपि ॥ २७ ॥

जो विधवाके तत्कालका गर्भ होतौ तिलके तेलमें सैंधको गीलाकर योनिमें धरे तौ उसी समय शुक्रपुष्पका मेल पृथक् हो स्राव होजाता है ॥ २७॥

## अथ गर्भपातनम् ॥

काण्डमेरण्डपत्रस्ययोनावष्टांगुलंक्षिपेत् ॥
चातुर्मास्योभवेद्गर्भःस्रवतेतत्क्षणादपि ॥ २८ ॥

अरंडके पत्तोंका मूठा योनिमें अष्ट अंगुल पर्यन्त रखनेसे चार महीनेका गर्भ उसी समय पतित होजाताहै ॥ २८ ॥

देवदालीयचूर्णंतुकर्षैकंतोयपेषितम् ॥
पिबेद्गर्भवतीनारीगर्भस्त्रवतितत्क्षणात् ॥ २९ ॥

देवदालीका चूर्ण एक कर्ष ( सोलहमासे ) गर्भवती स्त्री पीवे तो उसी समय गर्भ पतित होजाताहै ॥ २९ ॥

निर्गुण्डीद्रवसंपिष्टंचित्रमूलंमधुप्लुतम् ॥
कर्षंभुक्त्वापतत्याशुगर्भोरंडाकुलोद्भवम् ॥ ३० ॥

निर्गुण्डी (सिन्धुवार) के रसमें चीतेकी जड़ पीस शहत मिलाय एक कर्ष मात्र खाय तो उसी समय रंडाका गर्भ गिर जाताहै॥३०॥

इति गर्भस्रावणम् ॥

---

## अथ रक्तनिवारणम् ॥

धात्रींचपथ्यांचरसांजनंचकृत्वाविचूर्णंसजलंनिपीतम् ॥
अत्यंतरक्तोत्थितमुग्रवेगंनिवारयेत्सेतुमिवाम्बुपूरम् ॥३१॥

आमले हर रसौत इनका चूर्ण कर जलके साथ पीनेसे अत्यन्त रक्त जिसका जाताहो वह निवारण होजाताहै ॥ ३१ ॥

शेलुस्त्वचामिश्रिततंदुलेनविधायपिष्टंविनियोजनीयम् ॥
कन्दर्पगेहेमृगलोचनायारक्तंनिहंत्याशुहठेनयोगः ॥३२॥

शेलु वृक्षकी त्वचा और सांठीके चावल मिलाकर मृगलोचनीके योनिमें रखनेसे रक्तका वेग निवारण होताहै ॥ ३२ ॥

मूलंतुशरपुंखायाःपेषयेत्तन्दुलोदकैः ॥
पाययेत्कर्षमात्रन्तुअसिरक्तप्रशांतये ॥ ३३ ॥

सरफोंकेकी जड़ चावल के जलके साथ पीसनेसे कर्षमात्र पीनेसे अधिक रक्त शान्त होजाताहै ॥ ३३ ॥

कुशस्यमूलंकदलीदलंवाबलासिफावाबदरीफलम्वा ॥
गुडूचिकातण्डुलवारिपीतास्त्रीणामनेकंरुधिरंजयेच्च ॥३४॥

कुशकी जड़ केलेका पत्ता खरैंटी जटामांसी गुडूची बदरीफल यह चावलके जलके साथ पीनेसे रुधिरका अधिक निकलना बन्द होताहै ॥ ३४ ॥

कुरंटकस्यमूलानिमधुकःश्वेतचन्दनम् ॥
युक्त्यापिष्टाक्षमात्राणिपाययेत्तंदुलाम्बुना ॥ ३५ ॥

कुरंट ( कुटज ) की जड़ मुलैठी श्वेतचन्दन इनको बारीक पीस चावलके जलके साथ अक्षमात्र पीवे ॥ ३५ ॥

सकृत्पीत्वामाषयुतंप्रदरात्परिमुच्यते ॥
घृतभृष्टंमाषयूषभोजनंश्वेतचन्दनम् ॥ ३६ ॥

यह उर्दों के सहित पीने से प्रदरसे छूटा जाता है घीमें भुना हुआ यह उर्दोंका यूष और श्वेतचन्दन लेना चाहिये ॥ ३६ ॥

चन्दनंक्षीरसंयुक्तंसघृत्तंपाययेद्भिषक् ॥
शर्करामधुसंयुक्तमसृक्स्रवविनाशनम् ॥ ३७ ॥

क्षीरके सहित चन्दन और घृतपान करनेसे अथवा शर्करा और मधुपान करनेसे रुधिर पित्तविकार शान्त होजातेहैं इसमें जहां चन्दनहै वहां लालचन्दन लेना ॥ ३७ ॥

दार्वीरसांजनवृषाद्वकिराताबिल्वभल्लातकैरव
कृतोमधुनाकषायः ॥ पीतोजयत्यतिबलंप्रद
रंसशूलंपीतंशितारुणविलोहितनीलकृष्णम् ॥३८॥

देवदारु रसौत चिरायता बेल भिलावा अडूसा नागरमोथा इनका क्वाथ कर घृत मधु डालकर पीवेतो कठिन प्रदर शूल पीत श्वेत अरुण लाल नील कृष्ण सब प्रकारके उपद्रवकी शान्ति होजातीहै ॥ ३८ ॥

अशोकस्यत्वचासिद्धंक्षीरंरक्तहरंपिबेत् ॥
पेटारिकायाःपत्रंचमाषचूर्णेनसंयुतम् ॥ ३९ ॥

अशोककी छाल बच इनसे सिद्ध किया दूध पीनेसे रक्तनाश हो जाताहै पेटारिकाके पत्ते उर्दोंके चूर्णके सहित ॥ ३९ ॥

रम्भादलैर्वेष्टयित्वादाहयेच्चप्रयत्नतः ॥
तस्यभक्षणमात्रेणह्यतिरक्तनिवारणम् ॥ ४० ॥

रम्भाके दलसे वेष्टनकरके यत्नपूर्वक जलावै इसके भक्षण-मात्रसे अतिरक्तकी निवृत्ति होतीहै ॥ ४० ॥

तन्मूलन्तदुलैःपिष्ट्वापिष्टकम्भर्जयेद्बुधः ॥
तस्यभक्षणमात्रेणरक्तादिविकृतिंहरेत् ॥ ४० ॥

और इसीकी जड़ चावलके साथ पीसकर इस पिट्टीको भूनकर खायतो खातेही रक्तादि विकृति दूर होजातीहै ॥ ४१ ॥

तस्यवल्कलचूर्णन्तुभृष्टतंदुलचूर्णकम् ॥
भक्षणादेवतद्रक्तंस्त्रीणांशमयतिध्रुवम् ॥ ४२ ॥

और इसीके छालका चूर्ण तथा भुने चावलोंका चूर्ण भक्षणकर-नेसे अवश्यही स्त्रियोंका अति रुधिर निकलना बन्द होजाताहै ४१

शतावर्यास्तुमूलस्यनिजद्रावंसमाहरेत् ॥
त्वचाविंशत्पलान्येवम्वस्त्रपूतंप्रयत्नतः ॥ ४३ ॥

शतावरीकी जड़का द्रव स्वच्छ लावै और वीसपल उसकी छालको पीसे वस्त्रसे छानकर ॥ ४३ ॥

द्रवतुल्यंगवांक्षीरंक्षीरस्याद्द्विगुणंघृतम् ॥
जीवंतिकोलमन्दाराअतसीक्षीरकाकुली ॥ ४४ ॥
मुद्गपर्णीमाषपर्णीमहामेदाशतावरी ॥
द्राक्षापारशुकोयष्टिजीरकंप्रतिकार्षिकम् ॥ ४५ ॥

इस द्रवके तुल्य गौका क्षीर ले दूधसे दूना घृतले और जीवन्ती कोलमन्दार अलसी क्षीरकाकोली मुद्गपर्णी माषपर्णी महामेदा शतावरी दाख मुनक्का मुलेठी जीरा ॥ ४४ ॥ ४५ ॥

पलार्द्धंमधुकंपुष्पंसर्वमेकत्रपाचयेत् ॥
घृतशेषंसमुत्तार्य्यंशीतेजातेंचनिक्षियेत् ॥ ४६ ॥

एक २ कर्षके आधपल महुएके फूल इन सबको एकत्र करे जब घृतमात्र शेष रहजाय तब उतार ले ठंडा होनेपर पात्रम रखछोड़े ॥ ४६ ॥

पलाष्टकंकणाचूर्णंक्षौद्रंवापिप्पलाष्टकम् ॥
सितादशपलंयोज्यमिदंशतावरीघृतम् ॥ ४७ ॥

पीपल का चूर्ण आठपल अथवा शहत आठपल मिश्री दश पल इस में डालदे यह शतावरी घृत है ॥ ४७ ॥

लेह्यंकर्षंशमेदाशुदुःसाध्यमतिरक्तजम् ॥
दोषंक्षयंचमंदाग्निंहृद्रोगंग्रहणीग्रहम् ॥ ४८ ॥

इति रक्तनिवारणम् ॥

एक कर्ष इसका सेवन करै तौ रक्तदोष दूर होता है क्षतक्षय मन्दाग्नी हृद्रोग ग्रहणीरोग दूर होताहै ॥ ४८ ॥

इतिरक्तनिवारणम ॥

## अथ वंध्यानांगर्भधारणम् ॥

जन्मवंध्याकाकवंध्यामृतवत्साश्चयास्त्रियः ॥
तासांपुत्रोदयार्थायशंभुनासूचितंपुरा ॥ ४९ ॥

वंध्या कई प्रकार की होती हैं अर्थात् जन्मवंध्या काकवंध्या मृतवंध्या जिसके बालक नहीं जीते हैं उनके पुत्र होने के निमित्त शिवजीने विधान किया है ॥ ४९ ॥

तत्रप्रथमंजन्मवंध्याचिकित्सा ॥

समूलपत्रांसर्पाक्षींरविवारेसमुद्धरेत् ॥
एकवर्णगवीक्षीरेकन्याहस्तेनपेषयेत् ॥ ५० ॥

पहले जन्मवंध्या की चिकित्सा कहते हैं-जड़पत्ते सहित सुगन्ध रास्ना को रविवारके दिन उखाड़कर लावे उसको एकरंगवाली गौके दूधमें कन्याके हाथसे पिसवावै ॥ ५० ॥

ऋतुकालेपिबेद्वंध्यापलार्द्धंतद्दिनेदिने ॥
क्षीरशाल्यन्नमुद्गंचलघ्वाहारंप्रदापयेत् ॥ ५१ ॥

ऋतुकालमें वंध्या प्रतिदिन दो दो पल इसको पान करै दूध शालिधान्य मूंग आदि लघु आहार करै॥ ५१ ॥

एवंसप्तदिनंकुर्य्याद्वंध्याभवतिगर्भिणी ॥
उद्वेगंभयशोकंचदिवानिद्रांविवर्ज्जयेत् ॥ ५२ ॥

इस प्रकार सात दिन करनेसे वंध्या स्त्रीभी गर्भिणी होजाती है औषध सेवनके समय उद्वेग भय शोक और दिनमें सोना त्यागदे ॥ ५२ ॥

नकर्मकारयेत्किंचिद्वर्ज्जयेच्छीतमातपम् ॥
नोचेदपरमासेवाकारयेत्पूर्ववत्क्रियाम् ॥ ५३ ॥

कोई काम न करै शीत घामादिको नसहै और नहीं तो पूर्ववत् फिर दूसरे महीने क्रिया को करै ॥ ५३ ॥

पतिसंगाद्गर्भलाभंनात्रकार्याविचारणा ॥
एकमेवतुरुद्राक्षंसर्पाक्षीकर्षमात्रकम् ॥ ५४ ॥

पतीके संगसे वह गर्भको प्राप्त होती है इसमें सन्देह नहीं एक रुद्राक्ष और एक कर्ष सुगन्धरास्ना ॥ ५४ ॥

पूर्ववच्चगवांक्षीरैऋतुकालेप्रदापयेत् ॥
महागणेशमंत्रेणरक्षांतस्यानुबंधयेत् ॥ ५५ ॥

यह पूर्ववत् पिसाय ऋतुकालमें गौके दूधसे पीसकरदे और महागणेशके मंत्रसे रक्षा करै ॥ ५५ ॥

एवंसप्तदिनंकुर्य्याद्वंध्याभवतिपुत्रिणी ॥
ॐदददन्महागणपतेरक्षामृतंमत्सुतंदेहि ॥ ५६ ॥
पत्रमेकंपलाशस्यगर्भिणीपयसान्वितम् ॥
पीत्वाचलभतेपुत्रंरूपवंतंनसंशयः ॥ ५७ ॥

इस प्रकार सात दिन करनेसे वंध्या पुत्रिणी होती है महागणपति रक्षा देते हैं एक कोमल ढाकके पत्रको गर्भिणी दूधके साथ पीनेसे रूपवान् पुत्रको प्राप्त करती है इसमें संदेह नहीं ॥ ५६॥५७ ॥

पथ्यभुक्तंयथापूर्वंतद्वत्सप्तदिनावधि ॥
देवदालीयमूलंतुग्राहयेत्पुष्यभास्करे ॥ ५८ ॥

और जैसे पूर्वमें कहा है इसप्रकार सात दिन पर्यन्त करै जब पुष्यनक्षत्रमें सूर्य आवे तो देवदालीकी मूली ग्रहण करे ॥ ५८ ॥

निष्कत्रयंगवांक्षीरैःपूर्ववत्क्रमयोगतः ॥
वंध्याचलभतेपुत्रंदेयंपथ्यंयथापुरा ॥ ५९ ॥

गौका दूध तीन निष्क पूर्ववत् क्रियाके योगसे करै तो पूर्ववत् पुत्रको प्राप्त होती है पूर्ववत् पथ्यदे॥ ५९ ॥

शीततोयेनसंपिष्टंशरपुंखीयमूलकम् ॥
कर्षंपीत्वालभेद्गर्भंपूर्ववत्क्रमयोगतः ॥ ६० ॥

शरफोकेकी जड़ शीतल जल से पीसे पूर्वक्रमसे एक कर्ष लेतो पुत्र होताहै ॥ ६० ॥

मुस्ताप्रियंगुसौवीरंलाक्षाक्षौद्रंसमंपिबेत् ॥
कर्षतंदुलतोयेनवंध्याभवतिपुत्रिणी ॥ ६१ ॥

मोथा प्रियंगु सौवीर लाख शहत यह सब समान लेकर चावलके जल से एक कर्ष पीवैतो वंध्या पुत्रवती होतीहै ॥ ६१ ॥

पथ्यभुक्तंयथापूर्वन्तद्वत्सप्तदिनंपिबेत् ॥

समूलांसहदेवींचसंग्राह्यंपुष्यभास्करे ॥ ६२ ॥

और सात दिन पथ्यसे रहै जब सूर्य पुष्यनक्षत्रमें हो तो जड़ सहित सहदेईको ग्रहण करै ॥ ६२ ॥

छायाशुष्कंचतच्चूर्णमेकवर्णगवांपयः ॥
पूर्ववत्पिबतेनारीवंध्याभवतिगुर्विणी ॥ ६३ ॥

छायामें सुखाय उसको ग्रहणकरै चूर्ण कर गौके दूधसे स्त्री ग्रहण करै तौ गर्भिणी होती है ॥ ६३ ॥

मूलंशिखायाःखलुलक्ष्मणायाऋतौनिपीयंत्रिदिनंपयोभिः ॥
क्षीरान्नचर्यांनियमेनभुंक्तेपुत्रंप्रसूतेवनितानचित्रम् ॥ ६४ ॥

लक्ष्मणा ( श्वेतकटेरी ) की जड़ और पत्ते ऋतुकालमें दूधसे तीन दिन स्त्री पान करै तौ और दिनमें भी क्षीरादि लघु आहार करै तौ उसके पुत्र होताहै इसमें आश्चर्य नहीं ॥ ६४ ॥

सपिप्पलीकेशरशृंगवेरंभद्रोषणंगव्यघृतेनपीतम् ॥
वंध्यापिपुत्रंलभतेहठेनयोगस्तुसोयंमुनिभिःप्रदृष्टः ॥ ६५ ॥

पीपल केशर अद्रख भद्रमोथा पीपली यह गौके घीसे पान करनेसे वंध्याभी पुत्रको प्राप्त होती है यह योग मुनियोंका देखा हुआहै ॥ ६५ ॥

तुरंगगंधाघृतवारिसिद्धमाज्यंपयस्नानदिनेचपीत्वा ॥
प्राप्नोतिगर्भंनियमंचरंतिवंध्याचनूनंपुरुषप्रसंगात् ॥ ६६ ॥

असगंध औटाय घृतसे सिद्धकर घृत और दूधके साथ स्नान कर दिनमें पानकरै तो अवश्य नियम से रहनेसे वंध्या स्त्री पुत्रवती होतीहै यह शयनकालमें पीवे ॥ ६६ ॥

पुष्यार्कयोगोद्धृतलक्ष्मणायामूलंतथावज्रतरोश्वपिष्ट्वा ॥
अप्येकवर्णापयसानिपीतंस्त्रियःस्मृतंपुत्रकरंमुनीन्द्रैः ॥ ६७ ॥

पुष्य और सूर्य के योगमें लक्ष्मणाकी जड़ उखाड़कर लावै यह अथवा थूहरकी जड़ पीसकर दूध के साथ पीनेसे अवश्य पुत्र होताहै ॥ ६७ ॥

कन्दमूलंघृतैःपिष्ट्वाऋतौसागर्भिणीपिबेत् ॥
पुष्योद्धृतंलक्ष्मणमेवचूर्णंपुंसानिपिष्टंसघृतंनिपीतम् ॥
क्षीरोदनंप्राश्यपतिप्रसंगाद्गर्भम्विदध्यात्तरुणीनचित्रम् ६८॥

जो ऋतुमें बाराहीकन्दकी जड़को पीस घीके साथ खाय तौ वह गर्भिणी होतीहै अथवा पुष्य नक्षत्रमें उखाड़ी लक्ष्मणाका चूर्ण कर उसे घीके साथ पानकर पीछे दूधपान करै तौ तरुणी अवश्य गर्भवती होतीहै इसमें सन्देह नहीं ॥ ६८ ॥

कृष्णापराजितामूलंवस्तक्षीरेणसंपिबेत् ॥
ऋतुस्नातात्रिधायातुवंध्यागर्भधराभवेत् ॥ ६९ ॥

श्यामविष्णुक्रांताकी जड़ दूधसे पीसकर ऋतुसे स्नानकर तीन दिन पिये तो वंध्याभी गर्भ धारण करती है ॥ ६९ ॥

नागकेशरकंचूर्णंनूतनंगव्यदुग्धतः ॥
पिबेत्सप्तदिनंदुग्धंघृतैर्भोजनमाचरेत् ॥ ७० ॥

नागकेशरका चूर्ण ताजे गायके दूधके साथ सात दिन पर्यन्त पीवे और अधिक घृतयुक्त भोजन करे तो ॥ ७० ॥

तद्दतौलभतेगर्भंसानारीपतिसंगता ॥
पुत्रजीवकपत्रैकंपिबेत्क्षीरैर्ऋतौचया ॥ ७१ ॥

वह स्त्री पतिके संग करके अवश्य पुत्रको प्राप्त करती है जो स्त्री ऋतुमें जिये पोतेका एक पत्र दूधके साथ पान करती है ॥ ७१ ॥

पतिसंगाचसानारीसत्यंपुत्रवतीभवेत् ॥
तस्यमूलंचैकवर्णक्षीरैःपीत्वाचपुत्रिणी ॥ ७२ ॥

वह स्त्री पतिके संगमें अवश्य पुत्रवती होती है अथवा इसकी जड़ दूधके साथ बहुत महीन पीसकर पीनेसे पुत्रवती होती है ॥ ७२ ॥

काकोल्यौलक्ष्मणामूलंषष्टिकस्यचतंडुलम् ॥
नार्येकवर्णापयसापीत्वागर्भवतीभवेत् ॥ ७३ ॥

क्षीरकाकोली और कालोली श्वेतकटेरीकी जड़ सांठीके चावल ऋतुकालमें बहुत महीन दूधके साथ पीनेसे गर्भवती होतीहै॥७३॥

अश्विन्यांबोधिवृक्षस्यवन्दाकंग्राहयेद्बुधः ॥
गोक्षीरैःपानमात्रेणवंध्यापुत्रवतीभवेत् ॥ ७४ ॥

अश्विनीनक्षत्रमें कदंबके वृक्षका वन्दा ग्रहणकर गौके दूधसे उसके पानमात्र करनेसे स्त्री गर्भवती होती है ॥ ७४ ॥

तिलरसगुडचैकंगोपुरीषाग्नियोगा
त्तरुणवृषभमूत्रंप्रस्थयुक्तंविपक्वम् ॥ ७५ ॥
ऋतुदिवसविमध्येसप्तवारैश्चपीतं
जनयतिसुतमेतंनिश्चितंपुष्पितैव ॥ ७६ ॥

तिल रस गुड़ तरुण बैलका मूत्र १ सेर इसे गौके गोबरके उपलोंकी अग्निमें पकावे इसको ऋतुके दिनोंमें सातवार पीवे तो अवश्य पुत्र होता है इसमें सन्देह नहीं ॥ ७६ ॥

कदम्बपत्रंश्वेतंचबृहतीमूलमेवच ॥
एतानिसमभागानिअजाक्षीरेणपेषयेत् ॥ ७७ ॥

कदम्बपत्र श्वेतचंदन खटेरीकी जड़ इनको बराबर ले बकरीके दूध से पीसे ॥ ७७ ॥

त्रिरात्रम्पंचरात्रम्वापिबेदेतन्महौषधम् ॥
ऋतौनिपीयमानेतुगर्भोभवतिनिश्चितम् ॥ ७८ ॥

तीन रात वा पांच रात ऋतु के अन्तमें इस महौषधिको पान करनेसे रातमें पीनेसे अवश्य गर्भवती होती है ॥ ७८ ॥

गोक्षुरस्यतुबिजंचपिबेन्निर्गुंडिकारसैः ॥
त्रिरात्रंसप्तरात्रम्वावंध्याभवतिपुत्रिणी ॥ ७९ ॥

निर्गुण्डीके रसयुक्त गोखरूके बीज पीवे तीन वा सात रात पीनेसे वंध्या पुत्रवती होती है ॥ ७९ ॥

कर्कोटबीजचूर्णंतुएकवर्णगवांपयः ॥
ऋतौनिपीयमानेतुगर्भोभवतिनिश्चितम् ॥ ८० ॥

कर्कोटकके बीजोंका चूर्ण बारीक कर गौके दूधसे रात्रिमें पीवे तो अवश्य गर्भवती होती है ॥ ८० ॥

गोक्षुरस्यतुबीजंचपिबेन्निर्गुंडिकारसैः ॥
त्रिरात्रंसप्तरात्रम्वावंध्याभवतिपुत्रिणी ॥ ८१ ॥

गोखरूके बीज निर्गुण्डी के रस के साथ पान करने से तीन वा सात दिन इसके सेवन से वंध्या पुत्रवती होती है ॥ ८१ ॥

भगाख्येचैवनक्षत्रेवटवृक्षस्यमूलकम् ।
हस्तेबध्वालभेत्पुत्रंसुन्दरंकुलवर्द्धनम् ॥ ८२ ॥
अश्वत्थस्यतुवन्दाकंपूर्वेद्युःसुनिमंत्रितम् ॥
ऋतुस्नातेतुपीतंस्यादपिवन्ध्यालभेत्सुतम् ॥ ८३ ॥
एकवर्णसवत्सायागोक्षीरेणसुपेषितम् ॥
भावितंवटवन्दाकंपीतंवन्ध्यासुतंलभेत् ॥ ८४ ॥
पूर्वंपुत्रवतीयासाक्वचिद्वंध्याभवेद्यदि ॥
काकवंध्यातुसाज्ञेयाचिकित्सास्यास्तुकथ्यते॥८५॥

भग देवतावाले नक्षत्र पूर्वाफाल्गुनी में वट की जड़ हाथमें बांधनेसे वंध्या पुत्र पाती है । पीपलके वन्देको पहले दिन निमंत्रण

करै ऋतुमें पीनेसे वन्ध्या पुत्रवती होती है । एक वर्ण बछड़ेवाली गौके दूध में बड़के वन्देको भावनादे पीवे तो वंध्याके पुत्र हो जो पहले पुत्रवती होकर यदि फिर वन्ध्या हो जाय उसको काक-वंध्या कहते हैं उसकी चिकित्सा इस प्रकार है ॥ ८५ ॥

विष्णुक्रांतासमूलांतुपिष्ट्वादुग्धैस्तुमाहिषैः ॥
महिषीनवनीतेनऋतुकालेतुभक्षयेत् ॥ ८६ ॥

विष्णुक्रान्ता जड़ सहित भैंसके दूधमें पीसकर और भैंसके मक्खनके साथ ऋतुकालमें भक्षण करै ॥ ८६ ॥

एवंसप्तदिनंकुर्य्यात्पथ्यमुक्तंचपूर्ववत् ॥
गर्भंचलभतेनारीकाकवंध्यासुशोभनम् ॥ ८७ ॥

इस प्रकार सात दिन करै और पथ्यसे रहै तो वह काकवन्ध्या अवश्य गर्भवती होतीहै ॥ ८७ ॥

अश्वगंधीयमूलन्तुग्राहयेत्पुष्यभास्करे ॥
पेषयेन्माहिषीक्षीरैःपलार्द्धम्भक्षयेत्सदा ॥
सप्ताहाल्लभतेगर्भंकाकवंध्याचिरायुषम् ॥ ८८ ॥

पुष्य नक्षत्रमें सूर्यहो तो असगंधकी जड़को ग्रहणकरके भैंसके दूधसे पीसकर आधेपल भक्षण करे तो सात दिनमें काकवंध्या गर्भवती हो चिरायुष्क पुत्रको उत्पन्न करतीहै ॥ ८८ ॥

## अथ मृतवत्साचिकित्सा ॥

गर्भसंजातमात्रेणपक्षान्मासाच्चवत्सरात् ॥
म्रियतेद्वित्रिवर्षाद्वायस्याःसामृतवत्सिका ॥८९॥

जिसके बालक उत्पन्न होतेही पक्ष महीने वर्ष दोवर्ष वा तीन वर्षमें मर जातेहैं वह मृतवत्सा कहलातीहै ॥ ८९ ॥

तत्रयोगःप्रकर्त्तव्योयथाशंकरभाषितम् ॥
मार्गशीर्षेऽथवाज्येष्ठेपूर्णायांलेपितेगृहे ॥ ९० ॥

उसमें शंकरका कहा योग करना चाहिये मार्गशीर्ष अथवा ज्येष्ठकी पूर्णिमाको अपना घर लीपकर ॥ ९० ॥

नूततंकलशंपूर्णंगंधतोयेनकारयेत् ॥
शाखाफलसमायुक्तंनवरत्नसमन्वितम् ॥ ९१ ॥

नये कलशेमें जल भरकर उसमें सुगंधित द्रव्य डाले आम्रशाखा और नवरत्न उसमें डाले ॥ ९१ ॥

सुवर्णसूत्रिकायुक्तंषट्कोणमंडलेस्थितम् ॥
तन्मध्येपूजयेद्देवीमेकांतींनामविश्रुताम् ॥ ९२ ॥

सुवर्णसूत्रिका सहित छः कोन मण्डलकी रचना करे उसके मध्यमें एकान्ती नाम देवीकी पूजाकरै ॥ ९२ ॥

गंधपुष्पाक्षतैर्धूपैर्दीपनैवेद्यसंयुतैः ॥
अर्चयेद्भक्तिभावेनमद्यमांसैःसमत्स्यकैः ॥ ९३ ॥

गंधपुष्प अक्षत धूप दीप नैवेद्यसे संयुक्तकर भक्तिभावसे अर्चन करे मद्यमांस मत्स्य भी दे ॥ ९३ ॥

ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥
वाराहीचतथेन्द्राणीषट्सुपुत्रेषुमातरः ॥ ९४ ॥

ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही इन्द्राणी यह छः माताहैं ॥ ९४ ॥

पूजयेन्मंत्रबीजैश्चफेंकारैर्नामविश्रुतः ॥
दधिभक्तैश्चपिंडानिसप्तसंख्यानिकारयेत् ॥ ९५ ॥

इनको बीजमंत्रसे छः पत्रेमें पूजन करके फेंकार का उच्चारण करे और सात पिण्ड दधिके निर्माण करै ॥ ९५ ॥

षट्संख्याषट्सुपत्रेषुमातृभ्यःकल्पयेत्पृथक् ॥
बिल्वाभंसप्तमंपिंडंशुचिस्थानेबहिःक्षिपेत् ॥ ९६ ॥

छः तो छहौं माताओंको पत्रोंमें प्रदान करै और बेलकी समान सातवां पिण्ड पवित्र स्थानमें बहार रक्खै ॥ ९६ ॥

तैर्भुक्तेगृहमागच्छेच्चक्राग्रेयागमाचरेत् ॥
कन्यकायोगिनीवामाभोजयेत्सकुटुम्बकैः ॥ ९७ ॥

उसको भक्षण कर घर में आवै और उस चक्र के आगे याग करै और कन्या योगिनी स्त्रीको सकुटुम्ब भोजन दे ॥ ९७ ॥

दक्षिणान्दापयेत्तासांदेवताग्रेचनान्यथा ॥
विसर्ज्यदेवतांचाथनद्यांतत्कलशोदकम् ॥ ९८ ॥

और देवताके आगे उनको दक्षिणा दे फिर देवता को विसर्जन कर उस कलश के जलको नदीमें डाल दे ॥ ९८ ॥

सकुलंवीक्षयेद्धीमांच्छुभेनशुभमादिशेत् ॥
विपरीतेपुनःकार्यंयावत्तावत्सुसिद्धिदम् ॥ ९९ ॥

और कुटुम्ब सहित बुद्धिमान् उसको देखे शुभदिन कृत्य करै जबतक सिद्धि हो तबतक ॥ ९९ ॥

प्रतिवर्षमिदंकुर्य्याद्दीर्घजीविसुतंलभेत् ॥ १०० ॥

प्रतिवर्ष ऐसा करै तो दीर्घजीवी पुत्रकी प्राप्ति होती है ॥१००॥

"ॐह्रींफैंएकांतीदेवतायैनमः"

अनेनमंत्रेणपूजाजपश्चकार्यः ॥
प्राङ्मुखःकृत्तिकाऋक्षेवंध्याकर्कोटकींहरेत् ॥
तत्कन्दंपेषयेत्तोयैःकर्षमात्रंसदापिबेत् ॥
ऋतुकालेतुसप्ताहंदीर्घजीवीसुतोभवेत् ॥ १०१ ॥

'ओं ह्रीं फें एकांतीदेवतायै नमः' इस मंत्रसे पूजा जप करै ॥ कृत्तिका नक्षत्रमें पूर्वदिशा को मुखकर वंध्या स्त्री ककोंटकीको लावै उसकी जड़को जलसे पीसकर एक कर्ष सदा पीवे इस प्रकार सात दिन ऋतुकालमें करनेसे दीर्घजीवी पुत्रकी प्राप्तिहोती है ॥ १०१ ॥

याबीजपूरन्द्रुममूलकंवाक्षीरेणसिद्धंहविषाविमिश्रम् ॥
ऋतौनिपीत्वासुपतिम्प्रयातिदीर्घायुषंसातनयंप्रसूते ॥

जो बीजपूरकी जड़को दूधमें सिद्धकर हविष अन्नमें मिलाय ऋतुकालमें पान कर पतिके निकट जातीहै वह दीर्घायु पुत्रको उत्पन्न करतीहै ॥ १०२ ॥

मंजिष्ठामधुकंकुष्टंत्रिफलाशर्करावला ॥
मेदापयस्याकाकोलीमूलंचैवाश्वगंधजम् ॥
अजमोदाहरिद्रेद्वैहिंगुंकटुकरोहिणी ॥ १०३ ॥

मजीठ मुलेठी कूठ त्रिफला मिश्री खरैंटी महामेदा क्षीरकाकोली असगंधकी मूली अजमोदा दोनों हलदी हिंगु कुटकी ॥१०३

उत्पलंकुमुदंद्राक्षाकाकोल्यौचन्दनद्वयम् ॥
एतेषांकर्षिकैर्भागैर्घृतप्रस्थंविपाचयेत् ॥ १०४ ॥

नीलकमल कुमुद काकोली दाख क्षीरकाकोली दोनों चन्दन यह सब एक एक कर्ष लेकर एकशेर घीमें पकावे ॥ १०४ ॥

शतावरीरसंक्षीरंघृतंदेयंचतुर्गुणम् ॥
सर्पिरेतन्नरःपीत्वानित्यंस्त्रीषुवृषायते ॥ १०५ ॥

शतावरीका रस दूध घी यह चौगुना डाले यहघृत पान करके मनुष्य रतिमें स्त्रीसे प्रबल होताहै ॥ १०५ ॥

पुत्राञ्जनयतेनारीमेधाविप्रियदर्शनान् ॥
याचैवास्थिरगर्भास्याद्यानारीजनयेन्मृतम् ॥१०६॥

और स्त्री इसके सेवनसे बुद्धिमान् पुत्रोंको उत्पन्न करतीहै जो प्रिय दर्शन होताहै तथा जिस स्त्रीका गर्भ स्थिर होगयाहो वा जिसके मृतक संतानहो ॥ १०६ ॥

अल्पायुषंवाजनयेद्याचकन्यांप्रसूयते ॥
योनिदोषेरजोदोषेगर्भस्रावेचशस्यते ॥ १०७ ॥

वा जिसके अल्पायु संतान होती हो वा जिसके कन्याही होतीहो वा जिसके योनि और रजमें दोषहो वा जिसके गर्भस्राव होताहो उन सबके निमित्त यह प्रयोग उत्तमहै ॥ १०७ ॥

प्रजावर्द्धनमायुष्यंसर्वग्रहनिवारणम् ॥
नाम्नाफलघृतंह्येतद्रहस्यंपरिकीर्तितम् ॥ १०८ ॥
जीवद्वत्सैकवर्णयाघृतमत्रतुदीयते ॥
आरण्यगोमयेनात्रवह्नेर्ज्वालाप्रदीयते ॥ १०९ ॥
( अत्रपयस्याक्षीरयुक्ताभूमिकूष्माण्डाउत्पलंनीलम् )
इति फलघृतम् ॥

यह प्रजाकाबढ़ाने वाला आयुदाता सबग्रहका निवारण करने वाला फल घृतहै अश्विनीकुमारोंका है जीते बछड़ेवाली और एक वर्णवाली गौका घी इसमें लेना चाहिये इसको अरण्य उपलोंकी आंचसे बनावे घृतमात्र शेष रहनेसे उतारले इसे सेवनकरै ॥१०८॥१०९।

इति फलघृतम् ॥

---

## अथ गर्भस्रावरक्षा ॥

अकस्मात्प्रथमेमासिगर्भेभवतिवेदना ॥
गोक्षुरैःपेषयेत्तुल्यंपद्मकोशीरचन्दनम् ॥ १ ॥

अकस्मात् पहले महीनेमें गर्भमें वेदना होतीहै उस समय गोखरू पद्माख खस लाल चन्दन ॥ १ ॥

पलमात्रंपिबेन्नारीत्र्यहाद्गर्भःस्थिरोभवेत् ॥
अथवामधुकंदारुशाकवृक्षस्यबीजकम् ॥
संपेष्यक्षीरकाकोलींपिबेत्क्षीरैस्तुगोभवैः ॥ २ ॥

एक पलमात्र तीन दिन पान करनेसे गर्भ स्थित होजाताहै अथवा मुलैठी देवदारु शाकवृक्षके बीज और क्षीरकाकोली इनको पीस गौके दूधसे पान करै॥ २ ॥

द्वितीये ॥ नीलोत्पलंमृणालंचयष्टीककंटश्रृंगिका ॥
गोक्षीरैश्चद्वितीयंचपीत्वाशाम्यतिवेदना ॥ ३ ॥

दूसरे महीने नीलकमलकी जड़ मुलैठी काकडासींगी इन को बराबर ले गौके दूधके साथ पिये तौ दूसरे महीनेकी वेदना शान्त होजाती है ॥ ३ ॥

अथवाश्वत्थवल्कंचतिलंकृष्णंशतावरी ॥
मंजिष्ठासहितांपिष्ट्वापिबेत्क्षीरैश्चतुर्गुणैः ॥ ४ ॥

अथवा पीपलकी छाल कालेतिल शतावरी मजीठ इनको बरा-बर ले पीसकर चौगुने दूधके साथ पिये ॥ ४ ॥

तृतीये ॥ श्रीखण्डंतगरंकुष्टंमृणालंपद्मकेशरम् ॥
पिबेच्छीतोदकैःपिष्टंतृतीयेवेदनावती ॥ ५ ॥

तीसरे महीनेमें चन्दन तगर कूट मृणाल ( कमलकी जड़ ) कमल केशर यह ठंढे जलके साथ पिये तो तीसरे महीनेकी वेदना शान्त होजाती है ॥ ५ ॥

अथवाक्षीरकाकोलींवलांपिष्ट्वापयःपिबेत् ॥ ६ ॥

अथवा क्षीरकाकोली और सुगंधवाला जलसे पिये ॥ ६ ॥

चतुर्थे ॥ नीलोत्पलंमृणालानिगोक्षुरंचकशेरुकम्॥
तुर्य्यमासेगवांक्षीरैःपिबेच्छाम्यतिवेदना ॥ ७ ॥

चौथे महीनेमें नीलोत्पर कमलकी जड़ गोखरू कसेरू पीसके गौके दूधके साथ पीनेसे चौथे महीनेकी वेदना शान्त होजाती है॥ ७ ॥

अथवामधुकंरास्नाश्यामाब्राह्मणयष्टिका ॥
अनन्तांपेषयित्वातुगव्यंक्षीरैश्चसंपिबेत् ॥ ८ ॥

अथवा मुलैठी रास्ना श्यामाक ब्राह्मणयष्टि अनन्तमूल इनको पीसकर गौके दूधके साथ सेवन करे तो चतुर्थमासकी वेदना शान्त होजाती है ॥ ८ ॥

पञ्चमे ॥ पुनर्नवाथकाकोलींतगरंनीलमुत्पलम् ॥
गोक्षुरंपंचमेमासेगर्भक्लेशहरंपिबेत् ॥ ९ ॥

पंचममासमें पुनर्नवा काकोली तगर नीलोत्पल यह लेकर गौके दूधसे पियेतो पंचममासकी वेदना दूर होती है ॥ ९ ॥

अथवाबृहतीयुग्मंयज्ञाङ्गंकुम्भलंवरम् ॥
गोघृतंक्षीरसंयुक्तंपिबेत्पिष्ट्वाचपंचमे ॥ १० ॥

अथवा दोनों कटेरी ब्राह्मणयष्टिका कमलनाल गौके घी और दूधके साथ पंचम मासमें सेवन करे ॥ १० ॥

षष्ठे ॥ शिताकपित्थमज्जाचशीततोयेनपेषयेत् ॥
षष्ठमासिगवांक्षीरैःपिबेत्क्लेशनिवृत्तये ॥ ११ ॥

छठे महीनेमें मिश्री कैथका गूदा ठंढ़े जल के साथ पीसकर पिये वा गौके दूधके साथ पीनेसे वेदना शान्त होती है ॥ ११ ॥

अथवागोक्षुरंशिग्रुमधुकंपृष्टिपर्णिकाम् ॥
बलायुक्तंपिबेत्पिष्ट्वागोदुग्धैःषष्ठमासके ॥ १२ ॥

अथवा गोखरू सहिंजना मुलैठी पृष्टिपर्णी खरेंटी इनको गौके दूधसे छटे महीनेमें सेवन करे ॥ १२ ॥

सप्तमे ॥ कशेरुंपौष्करंमूलंशृंगाटंनीलमुत्पलम् ॥
पिष्ट्वाचसप्तमेमासिक्षीरैःपीत्वाप्रशाम्यति ॥ १३ ॥

कसेरू पुष्करमूल सिंघाड़ा नीलोफर पीसकर दूधके साथ पीनेसे सातवें मासकी व्यथा शान्त होजातीहै ॥ १३ ॥

अथवामधुकंद्राक्षाशृंगाटञ्चकशेरुकम् ॥
मृणालंशर्करायुक्तंक्षीरैःपेयंन्तुसप्तमे ॥ १४ ॥

अथवा मुलैठी दाख सिंघाड़ा कसेरू कमलकी जड़ मिश्रीके साथ दूधमें मिलाय पानकरे ॥ १४ ॥

अष्टमे ॥ यष्टीपद्माक्षकंमुस्तंकेशरंगजपिप्पलीम् ॥
नीलोत्पलंगवांक्षिरैःपिबेदष्टममासके ॥ १५ ॥

आठवें महीनेमें मुलैठी पद्माख मोथा नागकेशर गजपीपल नीलोत्पल यह गौके दूधमें अष्टममासमें पिये ॥ १५ ॥

अथवाबिल्वमूलन्तु कपित्थंबृहतीफलम् ॥
इक्षुपटोलयोर्मूलमेभिःक्षीरंप्रसाधयेत् ॥ १६ ॥

अथवा बेलकी जड़ कैथ दोनों कटेरी अर्थात् छोटी बड़ी गन्नेका रस पटोलकी जड़ यह दूधमें सिद्धकरे ॥ १६ ॥

तत्क्षीरमष्टमेपीत्वागर्भेशाम्यतिवेदना १७

यह दूध पनिसे आठवें मास की गर्भकी पीड़ा शान्त होजाती है ॥ १७ ॥

नवमे॥विशालाबीजकंकोलं मधुनासहपेषयेत् ॥
वेदनानवमेमासिशांतिमाप्नोतिनान्यथा ॥ १८ ॥

नौमें महीनेमें इन्द्रायनके बीज क्षीरकाकोली शहत के साथ पनिसे नवमें महीने की व्यथा शान्त होजातीहै ॥ १८ ॥

अथवामधुकंश्यामाह्यनन्ताक्षीरकाकुली ॥
एभिःसिद्धंपिबेत्क्षीरंनवमेवेदनावती ॥ १९ ॥

अथवा मुलैठी गुडूची अनन्तमूल प्रियंगु इनसे सिद्धकर नौवें महीनेमें दूध पिये तौ वेदना शान्त होतीहै ॥ १९ ॥

दशमे ॥ शर्करागोस्तनीद्राक्षासक्षौद्रंनीलमुत्पलम्॥
पाययेद्दशमेमासिगवांक्षीरैःप्रशान्तये ॥ २० ॥

दशमें महीनेमें मिश्री मुनक्का शहत नीलकमल यह गौके दूधसे दशमें महीनेमें पानकरे तो वेदना शान्त होती है ॥ २० ॥

अथवाशुंठिसंसिद्धंगोक्षीरंदशमेपिबेत् ॥
अथवामधुकंदारुशुंठीक्षीरेणसंपिबेत् ॥ २१ ॥

अथवा सोंठसे सिद्धकर गौका दूध दशमें महीनेमें पान करे अथवा मुलैठी देवदारु सोंठ गौके दूधसे पिये ॥ २१ ॥

सामान्ये॥धात्र्यञ्जनंसावरयष्टिकाख्यंत्र्यहंनिपीतंप्रमदाहठेन
सप्ताहमात्रंविनियोज्यनारीस्तभ्नातिगर्भंचलितंनचित्रम्२२

सामान्यतासे जो नारी लोध(वा आमला) सौवीरांजन मुलैठी सात दिन सावधान होकर पीतीहै तो उसका गर्भ स्तंभित होताहै फिर चलायमान नहीं होता ॥ २२ ॥

क्षौद्रंवृषंचन्दनसिंधुजातंमहेन्द्रमाज्यंपयसासुपिष्टम् ॥
गर्भंक्षरंतंप्रतिहंतिशीघ्रंयोगोयमुक्तःकिलमूलदेवैः ॥२३

शहत अडूसा चन्दन सैंधा इद्रजौ घृत यह जलसे पीसकर देनेसे पड़ताहुआ गर्भ शीघ्र थम जाताहै यह योग मौलिदेवने कहाहै२३॥

कुलालहस्तोद्भवकर्दमस्यवत्सीपयःक्षौद्रयुतस्यमात्रम्।
गर्भच्युतिंशूलमयींनिवार्य्यकरोतिगर्भंप्रकृतंहठेन २४॥

कुम्हारके चाकपर बर्तन बनाते समय जो पतली मिट्टी हाथमें

लगतीहै उसको ले बकरीके दूधमें डालकर शहतके साथ पिये तो शूलयुक्तगर्भके गिरनेको निवारण करताहै और स्थापित करताहै २४

कशेरुशृंगाटकबीजकाणिपयोघनैरंडशतावरीभिः ॥
सिद्धंपयश्शर्करयाविमिश्रंसंस्थापयेद्गर्भमुदित्यशूलम् ।

कशेरू सिंघाड़ा बिजौरा नागरमोथा एरण्ड शतावरी इनसे सिद्ध किया जल मिश्री डालनेसे शूल निवारण करताहै और गर्भको गिरनेसे रोकताहै ॥ २५ ॥

कंदःकौमुदकस्यमाक्षिकयुतंक्षीराज्यमिश्रंपिबे-
त्सप्ताहंसितयासुपक्कमबलाशीतीकृतंवायुना ॥
गर्भस्रावमरोचकंसपवनंशोफंत्रिदोषंवमिं
शूलंसर्वविधंनिहंतिनियमादेवंचयत्तत्स्मृतम्॥२६॥

कुमुदका कन्द शहत घी दूध मिलाकर पिये अर्थात् इसमें मिश्री डालकर ठंढ़ाकर सात दिन पियेतो गर्भस्राव अरोचक वातरोग सूजन त्रिदोष चमचमाहट शूल यह सब नियमसे सेवन करनेसे नष्ट होजातेहैं ॥ २६ ॥

ह्रीवेरातिविषामुस्तामरिचंसंशृतंजलम् ॥
दद्याद्गर्भेप्रचलितेप्रदरेकुक्षिवद्यापि ॥ २७ ॥

हीवेर अतीस मोथा मोचरस कुटज जौ इनका क्वाथ कर गिरते हुए गर्भमें देनेसे प्रदर कोखरोगमें देनेसे शूलादि नष्ट होजातेहैं॥२७॥

कुवलयकन्दंसतिलंपीत्वाक्षीरेणमधुसितायुक्तम् ॥
गुरुतरदोषैश्चलितंगर्भसंस्थापयेदाशु ॥ २८॥

कमलका कन्द तिल यह शहत मिश्रीयुक्त दूधके साथ पीनेसे गुरुदोषसे गिरतेहुए गर्भकोभी शीघ्र स्तंभन करताहै ॥ २८ ॥

पद्मोत्पलमृणालानिमधुकंशर्करातिलाः ॥
द्रवमानेषुगर्भेषुगर्भस्थापनमुत्तमम् ॥ २९ ॥

पद्म नीलोत्पलकीनाल मुलैठी मिश्री बडीकटेरी यह गर्भ
र्भ रतेमें स्थापन करताहै ॥ २९ ॥

इति गर्भस्रावरक्षा ॥

## अथ गर्भशुष्के ॥

गोक्षीरंशर्करायुक्तंगर्भशुष्कप्रशांतये ॥
पिबेद्द्राम‍धुकंचूर्णंगंभारीफलचूर्णकम् ॥
समांशंगव्यदुग्धेनगुर्विणीतत्प्रशांतये ॥ ३० ॥

इति गर्भशुष्कनिवारणम् ॥

अथ गर्भ शुष्क शान्ति । शर्करा के सहित गौका दूध सेवन करने से शुष्कगर्भकी शान्ति होती है ॥ अथवा गंभारीके फलका चूर्ण वा मुलैठी का चूर्ण शहत के साथ पान करै अथवा गर्भिणी स्त्रि जिसका गर्भ सूखता हो वह गायका दूध सेवन करै ॥ ३० ॥

इति शुष्कगर्भनिवारणम् ॥

## अथ सूतिकानिरोधेसुखप्रसवमाह ॥

श्वेतम्पुनर्नवामूलंचूर्णयोनौप्रवेशयेत् ॥
क्षणात्प्रसूयतेनारीगर्भेणातिप्रपीडिता ॥ ३१ ॥

सुखसे प्रसव होनेकी विधि ॥ श्वेत पुनर्नवा की जड़का चूर्ण स्त्रीयोनिमें प्रवेश करै तो तत्काल प्रसव होता है और गर्भकी पीड़ा नहीं होती है ॥ ३१ ॥

उत्तराभिमुखंग्राह्यंश्वेतगुंजीयमूलकम् ॥
कट्यांबध्वासप्तसूत्रैःसुखंनारीप्रसूयते ॥ ३२ ॥

उत्तरकी ओर मुख कर श्वेत चोटलीकी जड़ ग्रहण करके उसे कच्चे सूतसे बांधे तो स्त्री सुखसे प्रसववती होती है ॥ ३२ ॥

उत्तरेचसमालोड्यंश्वेतगुंजाफलांकियत् ॥
सुखप्रसवमाप्नोतितत्क्षणान्नात्रसंशयः ॥ ३३ ॥

वा पेटमें बांधनेसे अथवा उत्तरको देख समालोड़ितकी श्वेत चौंटलीका लेप सुखसे प्रसव करता है इसमें सन्देह नहीं ॥ ३३ ॥

योनिम्वालेपयेत्तेनसासुखेनप्रसूयते ॥
सहदेव्याश्वमूलंवाकटिस्थंप्रसवेत्सुखम् ॥ ३४ ॥

अथवा योनिमें लेप करनेसे सुखसे सन्तान उत्पन्न होती है अथवा सहदेईकी जड़ कमरमें बांधने से स्त्रीके सुखेस बालक उत्पन्न होताहै ॥ ३४ ॥

अपामार्गस्यमूलन्तुग्राहयेच्चतुरङ्गुलम् ॥
नारीप्रवेशयेद्योनौतत्क्षणात्साप्रसूयते ॥ ३५ ॥

चिरचिटेकी जड़ चार अंगुलकी ग्रहण कर योनिमें रखनेसे स्त्री सुखसे बालक उत्पन्न करती है ॥ ३५ ॥

तोयेनलांगलीकन्दंघृष्ट्वायोनिंप्रलेपयेत् ॥
नाभिंचलेपयेत्तेनतत्क्षणात्सूयतेध्रुवम् ॥ ३६ ॥

अथवा कलिहारीकी जड़ घिसकर नाभिमें प्रलेप करे तो बहुत शीघ्र सन्तान होतीहै ॥ ३६ ॥

गुंजाफलार्द्धखंडंचतोयपूगंतथार्द्धकम् ॥
पिबेद्वातोयपिष्टंचसासुखेनप्रसूयते ॥ ३७ ॥

चौंटली आधेपल खांड आधेपल सुपारी इनको जलके साथ पीसकर पीनेसे सुखसे स्त्री प्रसव करती है ॥ ३७ ॥

गुंजातरोर्मूलयुगंविधानादुत्पाट्यपुष्येचरवौनिबद्धम् ॥

कटीतलेमूर्द्धनिनीलसूत्रैःशीघ्रंप्रसूतिंकुरुतेंगनायाः॥३८॥

चौंटलीकी जड़ और चौंटली यह विधिपूर्वक रविवारके दिन पुष्यनक्षत्रमें लावे उसे कमरके नीचे वा शिरमें नीलसूत्रसे बांधनेसे स्त्री शीघ्र प्रसव करती है ॥ ३८ ॥

आगारधूमंगृहवारिणावापीत्वाबलाशीघ्रतरंप्रसूते ॥
अलम्बुषामूलमथोनिबद्धंयोगद्वयंभूपतिरित्यवादीत् ॥३९॥
समातुलुंगंमधुकस्यचूर्णमध्वाज्यमिश्रंप्रमदानिपीय ॥
व्यथाविहीनंप्रसवंहठेनप्राप्नोतिनैवात्रविकल्पबुद्धिः॥४०॥
( अत्रमातुलुंगस्यमूलंग्राह्यंनतुफलंक्वाथयित्वापेयम्। )

गृहका धूम जलके साथ पीनेसे स्त्री शीघ्र सन्तान करती है अथवा लज्जालूकी जड़ कमरमें बांधनेसे शीघ्र प्रसव होताहै यह राजाने कहा है मातुलुंग और मुलैठीका चूर्ण शहत घीसे मिलाकर स्त्री पान करै तौ व्यथाके विनाही सुखसे सन्तान होती है इसमें सन्देह नहीं ॥ मातुलिंगी की जड़ ग्रहण करनी फल नहीं क्वाथ करके पीना चाहिये ॥ ४० ॥

दशमूलीशृतंतोयंघृतसैंधवसंयुतम् ॥
शूलातुरापिबेन्नारीसासुखेनप्रसूयते ॥ ४१ ॥

दशमूल का काढा घृत और सैंधके सहित शूल से व्याकुल स्त्रीको पिलानेसे सुखसे स्त्री प्रसववती होतीहै ॥ ४१ ॥

"ॐमन्मथॐमन्मथॐमन्मथमन्मथवाहिनीलम्बोदरमुंच २ स्वाहा"॥अनेनमंत्रेणजलंसुतप्तंपातुंप्रदेयंशुचिनानरेण ॥ तोयाभिपानात्खलुगर्भवत्याप्रसूयतेशीघ्रतरंसुखेन ॥ ४२ ॥

'ॐ मन्मथ ॐमन्मथ ॐमन्मथ मन्मथ वाहिनी लम्बोदर मुंच २

स्वाहा' इस मंत्रसे पवित्र होकर गरमकर जल स्त्रीको पिलावै तो इस जलके पान करनेसे स्त्री सुखप्रसूति होती है ॥ ४२ ॥

"ॐकारंचहकारंचअकारेणसुपूजितम् ॥
ॐकारेशिरसंकृत्वाअन्तेनमस्त्रिमूर्तये ॐ
हांनमस्त्रिमूर्त्तये" ॥ ४३ ॥

'ॐकार हकार अकार से युक्तकर ॐकार शिरपर कर अन्तमें त्रिमूर्तयेनमः लगावे ॐ ॐ हां नमस्त्रिमूर्तये' ॥ ४३ ॥

अनेनैवतुमंत्रेणजप्तव्यंसूतिकागृहे ॥
सुखंप्रसवमाप्नोतिसापुत्रंलभतेध्रुवम् ॥ ४४ ॥

इति सुखप्रसवविधिः ॥

इस मंत्रको प्रसूतिकाके घरमें जपे तो सुख से प्रसववती होती है और सुपुत्र को प्राप्त होती है ॥ ४४ ॥

इति सुखप्रसवविधिः ।

## अथ बालानांसूतिकायाश्चभूतग्रहनिवारणम् ॥

विल्वमूलन्देवदारुंगोशृंगंचप्रियंगुच ॥
मार्जारस्यमलंकुष्टंवंशत्वगाजमूत्रकैः ॥ ४५ ॥

अथ बालानां सूतिका ग्रह निवारणम् ॥ बेलकी जड़ देवदारु गोशृंग प्रियंगुफूल रक्तचीतेकी जड़ बिल्लीका मल कूठ बांसकी छाल यह सब वस्तु बकरेके मूतमें पीस कर ॥ ४५ ॥

पिष्ट्वाधूपोनिहन्त्याशुग्रहभूतज्वरादयः ॥
डाकिनीराक्षसाःप्रेताःपिशाचाब्रह्मराक्षसाः ॥ ४६ ॥
एकाहिकोद्व्याहिकश्चज्वरोनश्यतितत्क्षणात् ॥

धूपदेनेसे ग्रह भूतज्वर डाकिनी राक्षस प्रेत पिशाच ब्रह्मराक्षस दूर होते हैं एकांतरा तिजारी दूर होती है ॥ ४६ ॥

'ॐद्रावितंतापेठंठःस्वाहा' अनेनधूपन्दद्यात् ॥

श्रीवासंसर्षपंकुष्टंवचातैलंघृतंवसा ॥
धूपोबालग्रहेदेयोबालानांग्रहशांतये ॥ ४७ ॥

'ॐ द्रावित तापे ठंठः स्वाहा' इस मंत्रसे धूपदे ॥ चन्दन सरसों कूठ वच तेल घी चरबी इनकी धूप बालकों को ग्रहशान्तिके निमित्त देना चाहिये ॥ ४७ ॥

शिरीषनिम्बयोःपत्रंगोशृंगस्यत्वचावचः ॥
वंशत्वक्शिखिपिच्छंचकंगुनाचसमंघृतम् ॥ ४८ ॥

शिरस नीमके पत्ते गौके सींगकी त्वचा वच वंशकी छाल मोरपंख मालकांगनीकी समान घृत ॥ ४८ ॥

धूपोबालग्रहान्हंतिस्वयंमंत्रेणमंत्रयेत् ॥ ४९ ॥

यह सब एकत्र कर मंत्र पढ़ इन की धूप देने से बालग्रह दूर होते हैं ॥ ४९ ॥

ॐद्रुतंमुंचडुड्डामरेश्वरआज्ञापयतिस्वाहा ॥
धूपत्रयाणामेषमंत्रः ॥
पुनर्नवानिम्बपत्रसर्षपघृतविरचितोधूपः ॥
गर्भिण्याबालानांसततंरक्षाकरःकथितः ॥ ५० ॥

" ॐ द्रुतं मुंच २ डुड्डामरेश्वर आज्ञापयति स्वाहा " यह धूप देनेका मंत्र है पुनर्नवा नीमके पत्ते सरसौं और घी इनकी धूप मंत्रपढ़कर देनेसे गर्भिणी और बालकों की रक्षा होती है ॥ ५० ॥

दाडिमस्यतुवन्दाकंज्येष्ठाऋक्षेसमुद्धरेत् ॥
द्वारेबद्धंतुबालानांसर्वग्रहनिवारणम् ॥ ५१ ॥

ज्येष्ठानक्षत्रमें दाडिमका वन्दा लावै वह बालकों के घरके द्वारे बांधनेसे सब ग्रहोंका निवारण होताहै ॥ ५१ ॥

पुष्यार्केश्वेतगुंजायामूलमुद्धृत्यधारयेत् ॥

बालानांकंठदेशेचडाकिनीभयनाशनम् ॥ ५२ ॥

पुष्यनक्षत्रमें श्वेत चौंटलीकी जड़ धारण करे अर्थात् बालकों के कंठमें बांधनेसे डाकनीका भयनाश होजाताहै ॥ ५२ ॥

श्वेतापराजितापत्रंजयापत्रंद्वयोरसम् ॥
नस्यंकुर्य्यात्पलायन्तेडाकिनीदानवादयः ॥ ५३ ॥

श्वेत विष्णुक्रान्ताके पत्ते और गुड़हरके पत्ते इन दोनोंके रसका हुलास देनेसे डाकनी दानवादि पलायन करजाते हैं ॥५३॥

सर्पत्वक्शिखिजारिष्टपल्लवंरजनीवचा ॥
रसोनांहिंगुगोलोमशृंगीमरिचमाक्षिकैः ॥ ५४ ॥

सांपकी कैंचली सीसम नीमकेपत्ते हलदी वच ल्हसन हिंगु गैके लोम ( बाल ) काकड़ासिंगी कालीमिरच शहत ॥ ५४ ॥

धूपःसर्वज्वरघ्नोयंकुमाराणांज्वरापहः ॥
छुच्छुन्दरीमलंमांसंहरिद्राबिल्वपत्रकम् ॥ ५५ ॥
इन्द्रजंसर्षपंपत्रंधूपेनतत्प्रयोजितम् ॥
निहंतिरोदनंरात्रौबालस्याशुनसंशयः ॥ ५६ ॥

इसकी धूप सम्पूर्ण ज्वर तथा कुमारोंका ज्वर हरनेवाली है छछूंदरका मल मांस हलदी बेलपत्र इन्द्रजौ सरसों तेजपात इनकी धूप देनेसे रातमें बालकका रोना थम जाता है इसमें संदेह नहीं ॥ ५६ ॥

मत्स्यराजस्यपित्तेनमरिचंभावयेद्बुधः ॥
रविवारेरौद्रशुष्कमञ्जनात्सर्वभूतहृत् ॥ ५७ ॥

मत्स्यराजके पित्तमें कालीमिरचकी भावना दे रविवारके दिन इसको सुखाय धूप देनेसे ग्रह दूर होते हैं ॥ ५७ ॥

नरसिंहस्यमंत्रेणसकृदुच्चरितंहरेत् ॥

डाकिंनीग्रहभूतानितमःसूर्य्योदयेयथा ॥ ५८ ॥

नृसिंहका मंत्र पढ़कर लावे इससे डाकिनी ग्रह भूतादि ऐसे भाग जाते हैं जैसे सूर्यके उदयमें अंधकार भाग जाता है ॥५८ ॥

"ॐनरसिंहायहिरण्यकशिपुवक्षःस्थलविदारणायात्रि भुवनव्यापकायभूतप्रेतपिशाचडाकिनीकुलोन्मूलना यस्तंभोद्भवायसमस्तदोषान्हरहरविश २ पच२हन २ कंपय २ मथ २ ह्रीं ३ फट् ठःठःठः एहि २ रुद्रआज्ञापयतिस्वाहा" ॥

## अथ नरसिंहमंत्रः ॥

"ॐह्रींह्रींह्रींह्रूंह्रूंह्रूंफट्स्वाहा"। अनेनसर्षपाअभिमं त्रितंकृत्वारोगिणंप्रहारयेत्॥तदासर्वेग्रहाःपलायन्ते। बालग्रहाभिभूतानांबलिंयत्नेनकल्पयेत् ॥ शुचिपक्कातुसप्ताहंमत्स्यंमांसंसुरांफलम् ॥ ५९ ॥

"ॐ नरसिंहाय हिरण्यकशिपुवक्षस्थल विदारणाय त्रिभुवनव्यापकाय भूत प्रेत पिशाच डाकिनी कुलोन्मूलनाय स्तंभोद्भवाय समस्तदोषान् हर हर विश २ पच २ हन २ कंपय कंपय मथ मथ ह्रीं ३ फट् ठ ठ ठ एहि एहि रुद्र आज्ञापयति स्वाहा' अथ नृसिंहमंत्रः। 'ॐ ह्रीं ह्रीं ह्रीं ह्रूं ह्रूं ह्रूं फट् स्वाहा' इन मंत्रसे सरसों पढकर मारे ताली बजावे तो सम्पूर्ण ग्रह भाग जाते हैं, जब बालकों को ग्रह आकर्षित करले तो यत्नसे उनकी बलिकल्पित करै सात दिन पर्यन्त पवित्रहो मत्स्य मांस सुरा फल ॥ ५९ ॥

पुष्पधूपाक्षतंगंधंदीपंचदक्षिणादिकम् ॥

चंतुष्पथेक्षिपेद्रात्रौशुद्धेनूतनखर्परे ॥
शनौवाकुजवारेवाबालदोषोपशान्तये ॥ ६० ॥
"ॐसर्वभूतेभ्योबलिंगृह्ण २ स्वाहा" ॥

इति बलिदानमंत्रः ॥

इति बालानांसर्वग्रहनिवारणम् ॥

पुष्प धूप अक्षत गंध दीप दक्षिणा यह सब वस्तु रात्रिमें शुद्ध और नई लेकर सिकोरेमें शनिवार मंगलको चौराहे में रखिआवै और यह मंत्र पढ़दे, 'ॐ सर्वभूतेभ्यो बलिंगृह्ण स्वाहा' ॥ ६० ॥

इति बलिदानमंत्रः ॥

इति बालानांसर्वग्रहनिवारणम् ॥

---

# अथ गर्भवत्याबालस्यअहितुंडिकादिनिवारणम् ॥

चंद्रग्रस्तेशिखीमूलंविधानेनोद्धरेद्बुधः ॥
बद्धंगलेचजघनेबालाहितुंडिकांजयेत् ॥ ६१ ॥

गर्भवती के बालक की अहितुंडिकादि निवारण करनी। चन्द्रग्रहणमें कलिहारीकी जड़ विधिपूर्वक लावै उसको बालक के गलेमें बांधनेसे अहितुंडिका दूर होती है ॥ ६१ ॥

श्वेतार्कमूलंसंगृह्यगृहस्तम्भेचबंधयेत् ॥
पुष्यार्कवारवेवीरबालाहितुंडिकांजयेत् ॥ ६२ ॥

पुष्यनक्षत्र में वा रविवारके दिन श्वेतआककी जड़ लाकर बांधनेसे बालकका अहितुंडरोग दूर होता है ॥ ६२ ॥

उदुम्बरभवंमूलंशिशुकट्यांचबंधयेत् ॥
बृहत्कूष्मांडवृत्तंवातेनाहितुंडिकांजयेत् ॥ ६३ ॥

इति बालानामहितुंडिकानाशनम् ॥

गूलरकी जड़ लाकर बालककी कमरमें बांधे अथवा बड़े पेंठे की डंठली बांधनेसे अहितुंड़िकारोग दूर होता है ॥ ६३ ॥

इति बालानामहितुंडिकानाशनम् ॥

---

## अथ स्त्रीणांपुष्परक्षा ॥

पलाशराजादनयोःफलानिपुष्पाण्यथोशाल्मलिपादपस्य ॥
आज्येनमासार्द्धदिनंपिबंतिरक्षाभवेन्निश्चितमेवपुष्पे ६४॥

अथ स्त्रीणां पुष्परक्षा । ढाक और क्षीरिणीवृक्षके फल सेमलके फूल यह घीके साथ पंद्रह दिन पान करनेसे निश्चयही स्त्रीके पुष्पकी रक्षा होती है ॥ ६४ ॥

तुषाम्बुनापावकवृक्षमूलंनिक्काथयित्वानियमंचरंती ॥
ऋत्वन्तकालेत्रिदिनंपुरंध्रीरक्षाभवेदामरणान्तमेव ॥६५

तुषकेजलसे चीतेकी जड लेकर जो नियम से काढा कर पीवै और नियमसे रहै और ऋतुके अन्तमें तीनदिन पान करनेसे जन्म पर्यन्त स्त्री के आर्तवकी रक्षा होती है ॥ ६५ ॥

फलंकदम्बस्यचमाक्षिकानित्विषोदकेनात्रिदिवंसकृत्वा॥
स्नानावसानेनियमेनपीत्वारक्षामवश्यंकुरुतेहठेन ॥६६॥

कदम्बके फल सोनामाखी यह तीन दिन तुषके जलसे पीस कर स्नानके अन्तमें तीन दिनतक इसे नियमसे सेवन करनेसे ऋतुकी रक्षा होती है ॥ ६६ ॥

त्रैहायनंवागुडमत्तिनित्यंपलप्रमाणंवनिताऽर्द्धमासम् ॥

जीवांतिकंनिश्चितमेवतस्यांरक्षाख्यमुक्तंकविपुंगवेन ६७॥

अथवा जो स्त्री पंद्रहदिन तक नित्य तीन वर्षके गुड़का चार तोला प्रमाणसे सेवन करती है कविपुंगव जीवनपर्यंन कहाहै ( ? ) ६७

कर्षद्वयंराक्षसवृक्षबीजंसप्ताहमात्रंशितशालिधान्यम् ॥
ऋतौनिपीतंमृगशावकाक्ष्यारक्षार्थमेतन्नियतंप्रदिष्टम्॥६८॥

इति स्त्रीपुष्परक्षा ॥

दोकर्ष राक्षसवृक्षके बीज यह दोनों शालिशाकधान्य यह ऋतुके अन्तमें सात दिनतक पान करनेसे अवश्य पुष्प की रक्षा होतीहै ६८

इति स्त्रीपुष्परक्षा ॥

---

## अथ दुर्भगाकरणम् ॥

ज्येष्ठानक्षत्रेनिम्बवन्दाकंयस्याअंगेदीयते
सादुर्भगाभवति इतिदुर्भगाकरणम् ॥ ६९ ॥

अथ दुर्भगाकरणम् । ज्येष्ठानक्षत्रमें नीमका वन्दा जिसके अंगमें दियाजाय वह दुर्भगा होती है ॥ ६९ ॥

इति दुर्भगाकरणम् ।

---

## अथकलहकरणम् ॥

विशाखानक्षत्रेनिम्बवृक्षस्योत्तरमूलंविवस्त्रोविमुखीभूयउत्पा
टचमुखेनयस्यचालयेक्षिपेत्तस्यगृहेप्रत्यहंकलहोभवति ॥
शाखोटमूलंपत्रंचएकीकृत्यस्थापयेत्तथा ॥ ७० ॥

विशाखानक्षत्रमें नीमके पेड़की जड़ उत्तरकी ओर मुखकर नग्न होकर मुखसे उखाड़े जिसके जहां फेंकदे प्रतिदिन उसके यहां क्लेश होताहै सिहोरेकी जड़ और पत्ते मिलाकर रखने से क्लेश होताहै७०॥

दूरेकृतेतुतद्वृक्षेभद्रंभवति। तन्नक्षत्रेशाखोटबदरीबीज
द्वयमेकीकृत्ययस्यगृहेस्थापयेत्तस्यानित्यंकलहोभवति ॥

ब्रह्मदण्डीसमूलाचकाकमाचीसमन्वितम् ॥
जातीपुष्परसैःपिष्ट्वासप्तरात्रंपुनःपुनः ॥ ७१ ॥
एषधूपःप्रदातव्यःशत्रुगोत्रस्यमध्यतः ।
यथागोत्रंसमाघ्रातिपितापुत्रैःसमंकलिः ॥ ७२ ॥

दूर करनेसे दूरहोताहै । विशाखानक्षत्रमें शाखोट और बेरकी दो गुठली एकत्र कर जिसके घरमें डाले उससे नित्य क्लेश होताहै । जल सहित ब्रह्मदण्डी काकमाची यह जाईके फूलोंके रसमें सातरात्रितक बारंबार पीसे, यह धूप शत्रुके गोत्रमें देनेसे सूंघनेसे पितापुत्रमें क्लेश होता है ॥ ७२ ॥

इति कलहकरणम् ।

इति श्री नित्यनाथविरचिते कामरत्ने षण्ढीकरणादि
कलहकरणान्तं नामोष्टमोपदेशः ॥ ८ ॥

---

## अथ सर्वारिष्टनाशार्थंरक्षाविधिः ॥

ईश्वरेणपुरादेव्यैयद्यत्तत्कथितंमया ॥
कादिद्विरवसानंचअक्षरंस्वरसंयुतम् ॥ १ ॥
ईकारेणापिसंपूज्यअधोरेफमयान्वितम् ॥
ॐकारंशिरसंकृत्वाजप्तव्यंसिद्धिमिच्छता ॥ २ ॥

अथ सम्पूर्ण अरिष्टनाशक रक्षाविधि। ईश्वरने पार्वतीके प्रति जो जो कुछ कहाहै आदि हकार अक्षर और स्वरके सहित वह हकारके सहित और नीचे रेफसे संयुक्त तथा आदिमें ओंकार लगाकर सिद्धिकी इच्छा करनेवालेको जपना चाहिये ॥ २ ॥

मंत्रोयम् " ह्रींह्रींह्रीं ॐ ह्रीं क्रीं ख्रीं वा
ॐ क्रीं ख्रीं ॐ ठ्रीं थ्रीं फ्रीं ह्रीं " ॥
स्वसंयमनमंत्रोयंशतार्द्धजपमात्रतः ॥
अशेषारिष्टनाशःस्यादित्याहपुरसूदनः ॥ ३ ॥

ह्रीं ह्रीं ह्रीं अथवा( ओंह्रीं क्रीं ख्रीं ) वा (ओंक्रींख्रीं क्ष्रीं यह मंत्र है ५० वार कहनेसेही यह मंत्र सिद्ध होजाता है और सम्पूर्ण अरिष्ट नाश करता है ऐसा शंकरने कहा है ॥ ३ ॥

कपरंचपरंचैवठपरंतपरन्तथा ॥
पपरंवर्णमाहृत्यईकारेणसुपूजितम् ॥ ४ ॥
अधोरेफसमायुक्तमोंकारैःशिरसंतथा ॥
मंत्रोयम् ॥ ख्रंछ्रंठ्रंथ्रंफ्रंह्रम् । शुद्धम् ।
श्रद्धयातुमहामंत्रंयेपठंतिसदामुने ॥
सर्वथातस्यपुंसःस्यात्सर्वारिष्टविनाशनम् ॥
हस्तेनरक्तपुष्पेणग्रथितयाचमालया ॥
अभिमन्त्र्यशतेनापिदद्यादेव्यैसदानघे ॥ ५ ॥

ककार पकार उकार तकार पकार यह हकार के सहित उसके नीचे रेफ लगानेसे प्रथम ओंकार उच्चारण करै मंत्र यह है 'ख्रं छ्रं ठ्रं थ्रं फ्रं ह्रं' ( शुद्ध ) हे मुने ! इस मंत्रका माहात्म्य जो सदा उच्चारण करते हैं उनके सब अरिष्ट नाश होजाते हैं और हाथमें लाल-फूल की माला लेकर इसको उच्चारण करते हैं सौवार अभिमंत्रित-कर देवीको चढ़ाते हैं ॥ ५ ॥

यावज्जीवंशुभंतस्यसर्वलाभोदिनेदिने ॥
नगृहेनिष्टपातःस्याल्लिखित्वास्थापनेऽपिच ॥ ६ ॥

उसको जन्मपर्यन्त शुभ होता है, अर्थात् दिन २ अर्थलाभ होता है, इसे लिखकर स्थापन करनेसे घरमें अरिष्ट नहीं होता है ॥ ६ ।

अक्षराणामंत्यवर्णालिखित्वापंचधानघे ॥
अधोरेफसमायुक्तमोंकारेशिरसंतथा ॥ ७ ॥.

अक्षरोंके अन्त्य वर्णोंको पंचविधिसे करके नीचे रेफ मिलाकर ॐकार सहित उच्चारण करै ईकार युक्त कर अन्तमें फट् लगावे ॥ ७ ॥

हकारेणचसम्पूज्यमन्तेफडक्षरंस्मृतम् ॥
ईकारेणचसंपूज्यअन्तेफडक्षरान्वितम् ॥
'ॐ क्ष्रीं । ५ । फट्'। मंत्रोयम्ममरूपस्यध्यानंजापंतथैवच ॥
ममैवहृदयंतस्यसदातद्गतमानसः ॥ ८ ॥

'क्ष्रीं फट्' यह मंत्रहै मेरेही रूपका ध्यान करे और जपकरे और तद्गतमन होकर मुझमेंही अपना मन लगावे ॥ ८ ॥

सदास्यात्तद्गृहेक्षेमंसहस्रार्द्धस्यजापनात् ॥
त्रैलोक्येतत्समोनास्तिनित्यंफलमवाप्नुयात् ॥ ९ ॥

इसमंत्रका पांचसे जप करनेसे उसके घरमें सदा अरोग्यता रहतीहै, इसकी समान त्रिलोकीमें कुछ नहीं, यह नित्यफल का देनेवाला है ॥ ९ ॥

नित्यंसम्पद्यतेराज्ञापत्न्यापुत्रेणबांधवैः ॥
ज्ञातिभिःसज्जनैश्चापिशत्रुभिश्चविशेषतः ॥ १० ॥

इससे राजा स्त्री पुत्र बांधवों के सहित नित्य सम्पत्तिमान होताहै ज्ञाति सज्जन शत्रु सबकी दृष्टि में विशेष होताहै ॥ १० ॥

जन्मांतरेसुखीप्राणीशृणुदेविमहाफलम् ॥
अन्तद्वयंसमागृह्यमधोरेफसमन्वितम् ॥ ११ ॥

जन्मान्तरमेंभी वह प्राणी सुखी होताहै, हे देवि ! इसका महा- फल सुनो दो अन्तके अक्षर ग्रहण कर उसके रेफ लगावै ॥ ११ ॥

ॐकारसंयुतंकृत्वारेखाबिन्दुसमायुतम् ॥१२ ॥

ॐकारसंयुक्त करके रेखाबिन्दुके सहित मंत्रोद्धार करै यह मंत्र है ॥ १२ ॥

मंत्रोयम् ॥

ॐक्ष्रौंक्ष्रौंअनेनैवतुमंत्रेणयेजपंतिमहाजनाः
तेसर्वेशांतिमायांतिसततंतस्यजापनात् ॥ १३ ॥

'क्ष्रौं क्ष्रौं' इसमंत्रको जो महाजनजप करते हैं वे निरन्तर इसके जपके फलसे शान्तिको प्राप्त हो जातेहैं ॥ १३ ॥

श्वेतार्कमूलंपुष्यार्केसमुद्धृत्यविधारयेत् ॥
बाहुभ्यांव्याधयोनस्युस्त्वरिष्टानिविशेषतः॥ १४ ॥

पुष्यनक्षत्रमें श्वेत आककी जड़ लगावै उसको भुजामें बांध- नेसे व्याधि और अरिष्ठ नहीं होता है ॥ १४ ॥

तद्दर्शनेननश्यंतिडाकिनीदानवादयः ॥
तद्धूपेनपलायन्तेप्रेताद्यादूरतोध्रुवम् ॥ १५ ॥

और उसके दर्शनसेही डंकिनी अथवा दानव आदि नष्ट होजातेहैं और इसकी धूपसेही प्रेतादि दूरसे भाग जाते हैं ॥ १५ ॥

पूर्वाभाद्रपदाऋक्षेवन्दाकंतुशिरीषजम् ॥
संगृह्यशिरसिक्षिप्तेअभयंभवतिध्रुवम्॥ १६ ॥

पूर्वाभाद्रपदनक्षत्रमें शिरसका वन्दा लावै उसको शिरपर रख- नेसे निश्चयसे अभय होता है ॥ १६ ॥

विष्णुक्रांताभवंमूलंहस्तस्थंचौरभीतिजित् ॥
नरसिंहस्यमंत्रेणसकृदुच्चारितेहरेत् ॥ १७ ॥

डाकिनीग्रहभूतानितमःसूर्य्योदयेयथा ॥
नरसिंहमंत्रः पुराबलाधिकारेलिखितः ॥
भूतप्रेतपिशाचादिभयेस्मृत्वानरोऽभयः ॥
भैरवींतुमहापूर्वींभवेदेवनसंशयः ॥ १८ ॥

वा विष्णुक्रान्ताकी जड़ हाथमें स्थित रखनेसे चोरका भय नहीं होता है और नृसिंहके मंत्रसे सब दुःख हरजाते है, डाकिनी गृह भूत ऐसे नष्ट होजाते हैं जैसे सूर्यके सन्मुख अंधकार नहीं रहता, नृसिंहमंत्र कहते हैं. वह जो पहले बलिके अधिकारमें कहाहै, प्रेत पिशाचादिके भयमें उसको स्मरणकर मनुष्य अभय होजाताहै और इसमें संदेह नहीं वह महा भैरवीका भक्त उसको जानता है १८

## अथ निद्राकरणम् ॥

निगडेचौरिकायांचपठेद्वारत्रयंयदि ॥
सर्वेप्रहारिकायांतिनिद्रायावशमेवच ॥ १९ ॥

चोरबेडीको तीनवार मंत्रसे अभिमंत्रित करै तो सब पहरा करनेवाले सो जांयगे ॥ १९ ॥

काककालिकामहिषासुरनाशिनीयोगनिद्राणीअमुकार॥
पुरियादेवीकालिकामालायोगनिन्द्राणीउदपानान॥ २०॥

काक कालिका महिषासुरनाशिनी योगनिद्राणी अमुकार पुरियादेवी कालिका मालायोगनिद्राणी उदयपानान ॥ २० ॥

दीकालमायाधरिनागनिद्राणीअमुकारपुरीदंडप
हरिभूपैलौठकालिकारआज्ञागडागडीपीठेकालि
कारआज्ञा इतिलौकिकमंत्रः ॥

नदीकाल मायाधरी नागनिद्राणी या अमुकारपुरी दंडपहरि भूपै लोटे कालिकार आज्ञा गडा गडी पीठे कालिकार आज्ञा

इति लौकिकमंत्रः ।

---

## अथनिगमोक्तम् ॥

ॐह्रींचंडांडउग्रचंडारिकाकालिकानिद्रयद्रय ॥ इति मंत्रेणमहानिद्राणीभवति ॥ एतन्मंत्रंपठित्वातस्य गृहेवाद्यवालोपठित्वाधूलिंकृत्वाक्षिपेत् ॥ कालिका विद्याकालमोहैदेवासुरनरकेहोस्थिरनहे ॥ २१ ॥ त्रिभुवनजगतकालिकारदासीयहरी ॥ जागंताल्लि निद्रगेलमहिमद्रभेयशी ॥ कालिकारआज्ञानिद्राली लागेउदयदेखि ॥ आनिंद्रभागेगुवाकंखादित्वातस्या वशिष्टंविवरंकृत्वासंयोज्यतत्रप्रस्नावयेत् ॥ तस्यवा टिकायामनेनमंत्रेणतस्यनिद्रांकरोति ॥ काकजं घाजटानिद्रांजनयेच्छिरसिस्थिता ॥ मूलंवाका कमाच्याश्वकृष्णायास्तद्गुणंस्मृतम् ॥ २२ ॥

अथ शास्त्रमंत्र 'ओं ह्रीं चण्डा उग्र चण्डारिका कालिका-न्द्रिय' इस मंत्र से महानिद्रा होती हैं यह मंत्र पढ़कर उसके घरमें विद्या निक्षेपकरै वह विद्या यह है कालिका विद्या काल मोहै देवासुर नरतकहो स्थिर लहै, त्रिभुवन जगत कालिकारदा सीयहरिजागंता निन्द्र गेल महि मंडले पसी कालिकार आज्ञा निद्राली लागे उदय देखि आनिन्द्रा भागे सुपारी खाकर उसके अवशिष्टमें विवर करके संयुक्तकर उसपर प्रस्नावकर उस वाटिकामें रखदे जो वहां उस वाटिकाके सेवन

करेगा पूर्वोक्त मंत्रसे निद्रा होती है ॥ घुंघची और रुद्रजटा शिर-पर डालनेसे निद्रित कर देती है अथवा काकमाची ( मकोय ) की जड़ पीपल शिरपर डालनेका भी यही गुण है ॥ २२ ॥

मुनिखंडकशाकंवाशय्यास्थानेखनेदथ ॥ करंजमूलंशिरसिबंधनात्कुरुतेतथा 'ॐशुद्धे २महायोगिनीमहानिद्रेस्वाहा'इसमंत्रसेमहानिद्रायणीदेवीका३०० जपकरै ॥ २३ ॥

बकवृक्ष इक्षु विशेषका शाक शय्यास्थान में खोदकर गाड़देनेसे अथवा करंजुए की जड़ शिरपर बांधनेसे नींद आजातीहै ॥२३॥

## अथ निद्राभंजनम् ॥

कनकधूस्तूरमूलंमृताभ्रकेतकीपुष्परजः ॥
एतानिपिष्ट्वाकपटवेषेनखादयेन्निद्राभंजनंभवति ॥२४॥
नीलोत्पलंसमरिचंनागकेशरमूलकम् ॥
पिष्ट्वातदंजयेच्चक्षुर्निद्रामाप्नोत्यसंशयः ॥ २५ ॥

इति निद्राकरणम् ॥

कृष्णधतूरेकी जड शोधाअभ्रक केतकीके फूलोंका रस यह सब पीसकर श्वेत कटेरीके रसमें खाय अथवा नीलोफर कालीमिर्च नागकेशर यह सब बारीक पीसकर नेत्रोंमें आंजै तो नींद आतीहै२५

इति निद्राभंग ॥

---

निद्राकामंत्र ३०० जपै ( ओं शुद्धे २ महायोगिनी महानिद्रेस्वाहा ) यह महानिद्रायणीका मंत्र है इसे पढकर श्मशानकी गोमूत्रसे प्लावित मृत्तिका घरमें डालनेसे निद्रा होती है यह निद्राकी विद्या संक्षेपसे कहीहै ।

## अथ बंधनमोचनम् ॥

मार्गशीर्षस्यपूर्णायांशिखीमूलंसमुद्धरेम् ॥
बंधनान्मुच्यतेतेनाशिखाबंधनसंशयः ॥ २६ ॥

अथ बंधमोचन मार्गशीर्ष महीनेकी पूर्णिमाको शिखीकी जडी उखाडकर लावै उससे अवश्य बंधनसे छूट जायगा इसमें संदेह नहीं ॥ २६ ॥

"ॐ नमःकनकपिंगलेरुद्रहृदयांशेरौद्रास्थिधारिणि तिष्ठतिष्ठसरसरसन्मोहयभगवतिशिखिजेतिमिरेम हामायेस्वाहा ॥ अथवा ॐ नमःकमलपिंगलेरुद्रहृ दयाङ्कवेतालअस्थिधारिणितिष्ठ २ सर २ सर्वान्मो हय२भगवतिशिखाजेतिमिरेमहामायेस्वाहा"॥अष्टो त्तरशतंजप्त्वाशिखायांपूर्वौषधंबंधयेत्ततःसिद्धिः ॥
प्लुक्षंसेनककरांतंलिखेद्बंधनमोचनम् ॥ २७ ॥

मंत्र यह है 'ओंनमःकनक पिंगले रुद्रहृदयांशे रौद्रास्थिधारिणि तिष्ठ तिष्ठ सरसरसन्मोहय भगवति शिखिजे तिमिरे महामाये स्वाहा। यह मंत्र एकसौआठवार जपकर शिखामें औषधी बांधनेसे सिद्धि होती है प्लुक्षांसे ककार पर्यन्त मंत्र लिखनेसे बंध-मोचन होताहै ॥ २७ ॥

## अथ निगडादिभंजनम् ॥

हस्तार्केसिन्दुवारस्यमूलंचोत्तरगंहरेत् ॥
स्पर्शनम्बंधविच्छेदंकुरुतेशीघ्रमारुतः ॥ २८ ॥

निगडादिभंजनम् । हस्तनक्षत्रमें उत्तरदिशामें जाकर सिन्धुवार की जड़ लावै उसके स्पर्शमात्रसे निगड़भंग हो जाता है इसमें संदेह नहीं ॥ २८ ॥

मांसीरक्तोत्पलंतुल्यंकृकलासेचभोजयेत् ॥
तन्मलैर्गुटिकांस्पर्शात्तालयंत्रेभिनन्त्यलम् ॥ २९ ॥

जटामांसी लालकमल यह बराबरले कृकलास ( घिरघट ) को भोजन करावे उसकी बीटकी गुटिके स्पर्श करके लगानेसे ताल-यंत्र टूटजाताहै ॥ २९ ॥

सुपक्वमिष्टिकांहस्तवज्रीप्राहस्तुयोगिभिः ।
सूक्ष्मचूर्णन्तुतांकृत्वालोहकिट्टमथापिवा ॥ ३० ॥

सुपक्वइष्टि और थूहरको रस कर लावे, ऐसा योगिराजोंने कहाहै उसका सूक्ष्म चूर्णकरके अथवा लोह कीटको लेकर ॥ ३० ॥

सूत्रैरज्जुंदृढीकृत्यतिलंतैलेनेलेपितम् ॥
तच्चूर्णलोडितंकृत्वामहालोहंभिनत्यलम् ॥ ३१ ॥

सूत्र में की रस्सी दृढकरके तिलके तेलसे लिप्तकरे उस चूर्ण को लगावे तो यह महा लोहेको क्षण में तोड़ देता है ॥ ३१ ॥

"ॐनमोभगवतेरुद्रायडङ्कामरेश्वरायबहुरूपायनाना रूपधरायहसनृत्यनृत्यतुदनानाकौतुकेन्द्रजालदर्श कायठःठःस्वाहा ॥

अनेनसर्वयोगाभिमंत्रासिद्धिः ॥

ॐ वाघवाहिनीसिंहेयाकान्तिकत्वान्मिकाआर्या देवीमंत्रितोरदासरणेनाहिथिलशतोइदवीत्रिभुवनमा तुचौसष्ठिमिनिबंधनभागिआपलाचण्डाचण्डचामु-ण्डीचामुण्डानिकटकालिकानादशनआगेअमुकाबं-धनभागियाआलावाधाधायापायेनिश्वलचौसष्ठीबंधन विरकालिकामाछांडेहुंकारचौसष्ठीमबंधनकाचारं

भागीभइलल्याइखंकालिकारआज्ञाआआजादेविमैंचि तोवदासरसेवाननाहिंविनासंतोम्वीदेवि ॥ त्रिभुवनर णरमायाचौसृष्टिबंधनभागीआम्पेला ॥ चंडाचण्ड चामुण्डाविकट्टकालिकामादनआगेअमुकारबंधन भागिआफेलाववाधवाघथायात्रानियन ॥ चौशठीबं धनमैलविरलाकालिकामाछडेहूंकारचौशठिबंधन काटारभाद्रिभरलक्षारस्वारकालिकारआज्ञा ॥ अथवा॥ ॐअग्निमुखीपिशाचीअमुकं हन हन पच पच शीघ्रंमेवशमानय"एतन्मंत्रद्वयंपूर्वमष्टोत्तरशतं जप्त्वासप्तवारंजप्तेनानाविधिबंधनछेदोभवति ॥ इति मंत्रंपठित्वाकरांगुल्याप्रहारयेत्द्वारिदत्तेद्वारमुक्तंभ वति ॥ दंहुंॐ॥ आयआयचिठिचिठिहांलोंवज्रनन्दि कांकालिका ॥ अनेनमंत्रेणश्वेतसर्षपंश्वेतोदुम्बरपु ष्पत्रयंत्रिः॥पठित्वाप्रथमद्वारेक्षिपेत्सर्वद्वाराणिभञ्जन्ति॥

इतिनिगडानांभंजनम् ॥

'ओं नमोभगवते रुद्राय उड्डामरेश्वराय बहुरूपाय नानारूपधराय हस २ नृत्य नृत्य तुद तुद नाना कौतुकेन्द्रजाल दर्शकाय ठः ठःस्वाहा' इसमंत्रसे अभिमंत्रित करनेसे सिद्धिहोतीहैं ॥ 'ओं बाद्य वाहिनि सिद्धे पाकादि लिका लाथि आआ जा देवीमें चितो वदा सरसे वान नाहिं विनाशं तोम्बिदेवी त्रिभुवन रणरमा पाचौ सृष्टि बंधन भागी आमूपेला चण्डा चण्ड चामुंडा विकंद कालिका मादन आगे अमुकार वन धन भागी आफेला व वाध वाघ पायात्रानि पन चौसट बंधनैंमल विरला कालिका माछड़े हूंकार चौसठि बंधनका ठार भाद्रि भाल क्षार

स्वार कालिकार आज्ञा ॥ यह दोनों मंत्र पहले एकसौआठ बार जपे फिर सातवार जपे तो अनेक प्रकार बंधनछेदन होजातेहैं । यह मंत्र पढकर हाथकी अंगुलीके प्रहारमात्रसे द्वार मुक्त होताहै ' दं हं ॐ आए आए चिठ चिठ हानां वज्र नन्दिका कालिका ' इसमंत्रसे श्वेत सरसों श्वेत उदम्बरके फूल तीनवार पढ़कर पहले द्वारपर फेके तो सब द्वार भग्न होजातेहैं ॥

इति निगडभंजनम्.

बिभीतकन्तुशाखोटमूलपत्रेणसंयुतम् ॥
स्थापयेद्यद्गृहद्वारेतस्यवैकलहोभवेत् ॥ ३२ ॥

बहेड़ा सिघोरा और इसकी जड पत्तेसहित जिसके घरके द्वारमें स्थापित करै उसके यहां सदा क्लेश होताहै ॥ ३२ ॥

मार्जारमूषिकद्विजदिगम्बराणांलोमभिर्धूपात् ॥
आर्द्रायांयत्रगृहेतत्रवैजायतेवैरम् ॥ ३३ ॥

मार्जार चूहा द्विज दिगम्बर इनके लोमकी धूपदेने आर्दानक्षत्रमें ऐसा करनेसे वैर होजाताहै ॥ ३३ ॥

## अथगृहक्लेशनिवारणम् ॥

तक्रपिष्टेनतालेनलेपयेत्पात्रकाकृतिम् ॥
तामाघ्रायगृहाद्यातिमक्षिकानात्रसंशयः ॥ ३४ ॥

हरतालको मट्ठेकेसाथ पीसकर पीली मक्खीकी समान उसको लेप करनेसे सूंघनेसे मक्खी नहीं आती इसमें संदेहनहीं ॥ ३४ ॥

गुडार्कदुग्धकुल्माषंतिलचूर्णसमान्वितम् ॥
अर्कपत्रेषुविन्यस्तंमूषकान्तकरंगृहे ॥ ३५ ॥

गुड आकका दूध कुल्माष ( कुल्थी ) उर्द तिल इनका चूर्ण कर आकके पत्तेपर रखनेसे मूषे नष्ट होजाते हैं ॥ ३५ ॥

तालकंछागविण्मूत्रंपलांडुंसहपेषयेत् ॥
आलिप्यमूषिकंतेनजीवितंचविसर्जयेत् ॥ ३६ ॥

हरताल छागकी विष्ठा और मूत्र इसको प्याजके साथ पीसे उससे मूषिकको आलेपन करके जीताहुआही छोड़दे ॥ ३६ ॥

तंदृष्ट्वाचगृहंत्यक्त्वापलायन्तेहिकौतुकम् ॥
मार्जारस्यमलंतालंपिष्ट्वामूषिकमालिपेत् ॥ ३७ ॥

उसको देखकर घरसे कौतुकपूर्वक पलायन करजातेहैं । मार्जारका मल हरताल यह पीसकर मूषकपर लपेटै ॥ ३७ ॥

तमाघ्रायगृहंत्यक्त्वासद्योनिर्यातिमूषिकाः ॥
गंधकंहरितालंचब्राह्मीत्रिकटुसंयुतम् ॥ ३८ ॥

उसको सूंघकर घरछोड चुहे अन्यत्र चलेजातेहैं, गंधक हरिताल ब्राह्मी त्रिकुटा ॥ ३८ ॥

छागलीमूत्रतःपिष्ट्वापूर्ववन्मूषिकंलिपेत् ॥
मघायांब्रध्नकंक्षेत्रेस्थापयेन्मधुकोद्भवम् ॥ ३९ ॥

छागलीके मूत्रसे यह औषधी पीसकर मूषकपर लपेटे मघानक्षत्रमें शुभक्षेत्रमें मधुकोद्भवको स्थापनकरे ॥ ३९ ॥

मक्षिकामूषकानांचजायतेतुंडबंधनम् ॥
मशकाकर्षकोदीपःसावरीगुडतैलजः ॥ ४० ॥

तो मूषक और मधुमक्खी की तुंड बंधनमें होजातीहै, मशकको जैसे एक दीप खैंचताहै ऐसे गुड तेल सावरी पढ़ाहुआहो ॥ ४० ॥

" पूर्वेब्रह्मामेबद्धःपश्चिमेविष्णुर्मेबद्धउत्तरे
रुद्रोमेबद्धदक्षिणेयमोमेबद्धः पातालेवासु
कीमेबद्धःफणिसहस्रेबद्धःहुंअंगुष्ठायनमः" ॥

करसंपुटंकृत्वातालत्रयंदद्यात् ॥
मूषिकमशकनिवारणम्भवति ॥ ४१ ॥

'पूर्वे ब्रह्मा मेबद्ध पश्चिमें विष्णु'मेबद्ध उत्तरे रुद्र दक्षिणे यम बद्ध पाताले वासुकी मेबद्ध फणीसहस्रे बद्धं ·हुं अंगुष्ठायनमः' कर संपुटकर तीन तालदे तो मच्छरोंका निवारण होताहै ॥ ४१ ॥

रोहिषतृणपुष्पन्तुवर्तिमध्येनिवेशयेत् ॥
तद्दीपदर्शनादेवक्षिप्रंनश्यन्तिमत्कुणाः ॥ ४२ ॥

रोहिषतृणका फूल बत्तीके बीचमें रक्खे उस दीपकके दर्शन-मात्रसे तत्काल खटमल नष्ट हो जाते हैं ॥ ४२ ॥

अर्कतूलमयीवर्तिर्भावयेद्यावकेनच ॥
दीपंतत्कटुतैलेननिश्शेषायांतिमत्कुणाः ॥ ४३ ॥

आकके तूलकी बत्तीको यावककी भावनादे उसको कडवे तेलसे संयुक्त दीपकमें जलावै तो सब प्रकार खटमल नष्ट होजाते हैं ४३

अर्ज्जुनस्यफलंपुष्पंलाक्षाश्रीवासगुंग्गुलम् ॥
श्वेतापराजितामूलम्भल्लातकविडंगकम् ॥ ४४ ॥

अर्जुनवृक्षके फल और पुष्प लाख श्वेत चंदन गूगल श्वेत अपराजिताकी जड भिलावा वायविडंग ॥ ४४ ॥

धूपंसर्जरसोपेतंप्रदेयंगृहमध्यतः ॥
सर्पाश्चमत्कुणामूषागंधाद्यांतिदिशोदश ॥ ४५ ॥

सर्जरस (राल) धूप घरमें देनेसे इसकी गंधसे सर्प चूहे खटमल सब नष्ट होजाते हैं ॥ ४५ ॥

गुडश्रीवासभल्लातविडंगंत्रिफलायुतम् ॥
लाक्षारसोर्कपुष्पंचधूपोवृश्चिकसर्पहृत् ॥ ४६ ॥

गुड श्वेतचन्दन भिलावा वायविडंग त्रिफला लाखका रस

आकका फूल इनकी धूप देनेसे घरमें सर्प और विच्छू नहीं रहता हैं ॥ ४६ ॥

मुस्तासिद्धार्थभल्लातकपिकच्छूफलंगुडम् ॥
चूर्णभानुफलोपेतंदहेत्सर्जरसैःसमम् ॥ ४७ ॥

मोथा सरसों भिलावा करंजकोछके फल गुड इनका चूर्णकर आकके फलसे संयुक्तकरै और सब समान रालको भस्म करै ॥४७

मत्कुणामशकास्सर्पामूषिकाविषकीटकाः ॥
पलायन्तेगृहंत्यक्त्वायथायुद्धेषुकातराः ॥ ४८ ॥

तो खटमल मच्छा सर्प मूषक विषके कीट वे सब युद्धमें कातर हुए मनुष्यकी समान घरको छोडकर भाग जाते हैं ॥ ४८ ॥

सर्ज्जरसःशक्रमेदोऽर्ज्जुनमूलमरुबकंकेतकनखवद्धः ॥
एतैर्धूपोरचितःकीटभुजगमशकमक्षिकादिहरः॥४९

राल कुडा मेदा अर्ज्जुनकी जड मैनफल केतकी नख इनकी धूप देनेसे कीट सर्प मशक मच्छर शहतकी मक्खी भागजाती है ॥ ४९ ॥

राजवृक्षफलंबद्धंखट्वायांमत्कुणापहम् ॥
लाक्षासर्ज्जरसोशीरंसर्षपःपत्रकंपरम् ॥ ५० ॥

खाटमें कर्णिकार वा अमलतासका फल बांधनेसे खटमल रह-नहीं पाते, लाख,राल,खश, सरसों यह सब (दुख) दूर करते हैं ५०

भल्लातकविडंगानिविश्वकंपुष्करंतथा ॥
जम्बुलोमशकंहंतिधूपाद्वागृहमध्यतः ॥ ५१ ॥

इति गृहक्लेशनिवारणम ।

वहेडा वायविडंग सोंठ पुष्करमूल इनकी धूप देनेसे जम्बूल और मशक दूर होते हैं ॥ ५१ ॥

इति गृहक्लेशनिवारणम् ।

# अथ क्षेत्रोपद्रवनाशनम्

अथक्षेत्रस्यशस्यानांसर्वोपद्रवनाशनम् ॥
वालुकाश्वेतसिद्धार्थान्प्रक्षिपेत्क्षेत्रमध्यतः॥ ५२ ॥

अब खेतीके सम्पूर्ण उपद्रव नाश करने वाला विधान कहते हैं । वालुका श्वेतसरसों यह खेतके बीचमें डालदे ॥ ५२ ॥

शलभाःसर्पकीटाश्चवराहामृगमूषिकाः ॥
मशकास्तत्रनोयांतिमंत्रविद्याप्रभावतः ॥ ५३ ॥

तौ शलभ सर्प कीडे वराह मृग मूषक खरगोश यह मंत्रविद्याके प्रभावसे वहां नहीं आते हैं ॥ ५३ ॥

" ॐनमःसुरेभ्यःबलंजउपारिपरिपारिमिलिस्वाहा ॥ ॐसुरेभ्योनमः ॥ नमस्कृत्यइमांविद्यांप्रयोजयेत् ॥ विद्यांप्रयोजयामीतिविद्यामेसिद्धचतुस्वाहा । अखिलजम्बूकानांमृगाणांशशकानांअन्येषांप्राणिनांशलभादीनामन्येषांप्राणिनांतुंडबंधनंकरोमीत्यत्रप्राणेकृतघ्नस्यतेनपापेनलिप्यतेयत्रमंत्रोऽव्यतिक्रमतिस्वाहा॥ एतन्मंत्रद्वयेनवालुकाभिःसहश्वेतसर्षपान्सप्तवाराभिमंत्र्यक्षेत्रमध्येक्षिपेत्सर्वोपद्रवोनश्यति ॥ मूषिजंबुककीटानांकुरुतेतुण्डबंधनम् ॥ विद्यामंकुशनाथस्यमंत्रंवाभैरवस्यच ॥ ॐनमोनगरनाथाययहहरहरशिलिरसर्वेषांप्राणिनान्तुण्डबंधनंकुरुकुरुहूंफट्स्वाहाउज्जयनीनगरीभैरवबोलेमहादेवभंडारफलबोलेहनुमन्तसाक्षीआस्तिअस्तु" ॥ ५४ ॥

ओं नंमः सुरेभ्यः वनजः जप परि पारि२रज परि परि शिनिस्वा

हा ॐ सुरेभ्योनमः इस प्रकार देवताओंको नमस्कारकर इस विद्याका प्रयोग करै विद्यांप्रयोजयामीति इन दो मंत्रोंसे वालूके साथ श्वेत सरसोंको सातवार अभिमंत्रित कर क्षेत्रके मध्यमें डालनेसे सब उपद्रव शान्त होजाते हैं, मूषक गीदड कीटादि जीवोंकी तुंडबंधित होजाती है । अंकुशनाथकी विद्या या भैरवका मंत्र पढै ॐनमो नगरनाथाय यथा यह हरहर शिलशिल सर्वेषां प्राणिनां तुण्डबंधनं कुरु२हूं फट् स्वाहा उज्जयनीनगरी भैरव बोले महादेव भंडार फूल बोले हनुमन्त साक्षी ३ अस्ति अस्तु' ॥ ५४ ॥

अनेनमंत्रेणसप्ताभिमंत्रितंचंदनंवाटिका ॥
मध्योनिःक्षिप्यपुष्पफलंसमस्तंनिरुपद्रवंभवति ॥
देवदालींचसिद्धार्थंगुटिकांकारयेद्बुधः ॥
क्षेत्रमध्येतुनिःक्षिप्यसर्वपक्षिभयंहरेत् ॥ ५५ ॥

इस मंत्रसे सात वार अभिमंत्रित कर चन्दन बगीचेके मध्यमें डालने से पुष्प फल सब निरुपद्रव होते हैं, देवदाली सरसों इन दो वस्तुओंका बुद्धिमान् गुटिका करै खेतके मध्यमें डाल देनेसे सब पक्षियोंका भय दूर होता है ॥ ५५ ॥

पूर्वाषाढाख्यऋक्षेतुवन्दाम्बिभीतवृक्षजम् ॥
शस्यमध्येक्षिपेत्तेनशस्यवृद्धिर्भवेद्ध्रुवम् ॥ ५६ ॥

इतिशस्यादीनांसर्वोपद्रवनाशनम् ॥

पूर्वाषाढनक्षत्रमें बहेडेका वन्दा लेकर खेतीके मध्यमें डालनसे शयस्की वृद्धि होती है ॥ ५६ ॥

इति शस्यानां सर्वोपद्रवनाशनम् ।

---

## अथगोमहिष्यादिदुग्धवर्द्धनम् ॥

"ॐह्रूंकारिणीप्रसवॐशीतलम्" अनेनसप्तवारंतृणा

दिकमभिमंत्र्यभोक्तुंदद्यात्तदाबहुलंदुग्धंप्रस्रवति ॥ ५७

अथ गोहिषी आदिके दूध बढ़ानेकी विधि । 'ॐहूं कारिणीं प्रसव ॐ शीतलम्' इस मंत्रसे तृण आदि को सातवार अभिमंत्रित कर गौ आदि के खाने को दे तो बहुत दूध गौ भैसदैगी, ॥ ५७ ॥

इति गोमहिष्यादिदुग्धवर्द्धनम् ॥

इतिश्री नित्यनाथ विरचिते कामरत्ने भाषाटीकायां अरिष्टनाशादि शस्योपद्रवनाशनं गोमहिष्यादि दुग्धवर्धनम् नाम नवमोपदेशः ॥ ९ ॥

---

## अथोच्चाटनम् ॥

मंगलवारेरात्रौश्मशानांगारंकृष्णवस्त्रेणकृत्वारक्तसूत्रेणसंवेष्ट्यंयस्यगृहेपरिक्षिपेत्सप्ताहाभ्यन्तरेतस्योच्चाटनंभवति॥पंचांगुलंचित्रकस्यकीलंग्राह्यंपुनर्वसौ॥सप्ताभिमंत्रितंगेहेखनेदुच्चाटनम्भवेत्॥"ॐलोहितमुखे स्वाहा"॥अस्यअष्टोत्तरसहस्रजपेनपुरश्चरणम्॥भरण्यामंगुलैकन्तुउलूकस्यास्थिकीलकम् ॥ सप्ताभिमंत्रितंयस्यनिखनेदुच्चाटनंभवेत्॥"ॐदहदह हन्हन् स्वाहा"॥काकोलूकस्यपक्षांस्तुहुत्वाह्यष्टोत्तरंशतम्॥यन्नाम्नामंत्रयोगेनसमस्तोच्चाटनंभवेत् ॥ "ॐनमो भगवतेरुद्रायदंष्ट्राकरालायअमुकंसपुत्रबांधवैः सह हन् २ दह २ पच२ शीघ्रंउच्चाटय २ हूंफट्स्वाहाठः ठः"लेपयेत्काकपित्तेनकीलमंगुलसंभवम्॥निखनेद्यस्यभवनेतस्यचोच्चाटनंभवेत्॥ "ॐह्रींदंडिन् २ महादण्डिन्नमोस्तुतेठःठः"नरास्थिकीलकंद्वारेनिखन्याच्च

तुरंगुलम् ।। मंत्रयुक्तंभरेद्द्वारेसत्यमुच्चाटनम्भवेत् ॥१॥

अथ उच्चाटनां,मंगलकेदिन रातको श्मशानसे काले वस्त्रमें अंगारलावै लालसूतमें लपेट जिसके घरमें डाले सात दिनमें उसका उच्चाटन हो पुनर्वसुनक्षत्रमें चित्रककी पांच अंगुलकी कील ग्रहण करै सात वार मंत्र पढ़कर घरमें डालदे उच्चाटन होजायगा।'ॐलोहित मुखेस्वाहा' १००८ जप पुरश्चरणकरै ॥ भरणीनक्षत्रमें एकअंगुल उल्लूकी अस्थि लेकर सात वार मंत्र पढकर जिसके यहां गाड़दे उसका उच्चाटन होजाता है यह मंत्र पढ़े 'ॐदह दह हन् २ कौए और उल्लूके एकसौ आठ पंखलेकर जिसके नामसे मंत्र पढ हवनकरै वह अवश्य उच्चाटन होगा. मंत्र यह है ॐनमो भगवते रुद्राय दंष्ट्रा करालाय अमुकं सपुत्रबांधवैः सह हन २ दह २ पच २ शीघ्रं उच्चा-टय २ हूं फट् स्वाहा. ठ.ठः' कौएके पिचसे एक अंगुल कीलको लिप्तकरै और उसे लिखकर जिसके द्वारपर डालदे उसका उच्चाटन होजाता है ॥ 'ॐ ह्रीं दंडिन् २ महा दंडिन् नमोस्तुते ठः ठः' मनुष्य-कीअस्थि ( हड्डी ) की चार अंगुलकी मंत्रपढकर जिस शत्रुके द्वारपर गाड़दे उसका अवश्य उच्चाटन होजायगा ॥ १ ॥

"ॐनमोभगवतेरुद्रायअमुकंगृह्ण२त्रासय २ त्रोटय २ नाशय २ पशुपतिराज्ञापयातिठःठः" ॥ मृतकस्यपुरुषस्यनिर्माल्यंचैलमेवच ॥ प्रेतालयात् समागृह्यस्यगेहेनिधापयेत् ॥ २ ॥

अष्टम्यांचचतुर्दश्यांतस्यैवोच्चाटनम्भवेत्॥एषयोगोमयाख्यातःविनामंत्रेणसिद्ध्यतिउद्धृतेनशान्तिः ॥३॥

मंत्र यह है'ॐ नमो भगवते रुद्राय अमुकं गृह्ण२ पच २ त्रासयं २ त्रोटय२ नाशय२पशुपतिराज्ञापयाति ठःठः'॥मृतक पुरुषका निर्माल्य और चैलवस्त्र मरघटसे ग्रहणकरके घरमें डालदे अष्टमी और चौदस

के दिन यहकृत्य करनेसे उसका उच्चाटन होजाता है, यह योगविनाहीं मंत्रके सिद्ध होता है उखाड़नेसे शांति होती है ॥ २ ॥ ३ ॥

श्वेतालांगलिकामूलंस्थापयेद्यस्यवेश्मनि ॥
निखनेत्तुभवेत्तस्यसद्यउच्चाटनंध्रुवम् ॥ ४ ॥

श्वेत कलिहारीकी जड़को घरमें डालदे,वा गाडदे उसके सब कुटम्बमें शीघ्रही उच्चाटन होता है ॥ ४ ॥

सिद्धार्थंशिवनिर्माल्यंयद्गेहेनिखनेद्बुधः ॥
उच्चाटनंभवेत्तस्यउद्धृतेतुपुनःसुखी ॥
संगृह्यवृक्षात्काकस्यनिलयंप्रदहेच्चतम् ॥ ५ ॥

सरसों शिवका निर्माल्य जिसके घरमें गाडदे उसका उच्चाटन होजाता है उखाड़नेसे सुखी हो वृक्षपरसे कौएका घोसला लेकर उसे जलादे ॥ ५ ॥

चिताग्नौभस्मतःशत्रोर्दत्तांशिरसिसुन्दरी ॥
तमुच्चाटयतेदेविशृणुयोगमनुत्तमम् ॥
भवेत्तस्यउद्धृतेचपुनस्सुखी ॥ ६ ॥

उस चिताकी भस्म शत्रुके शिरपर डालनेसे अवश्य उच्चाटन होजाता है; हे देवी! यह उत्तम योग है फिर उसके वहांसे उखाड़नेसे सुखी होता है ॥ ६ ॥

इत्युच्चाटनम्।

---

## अथविद्वेषणम् ॥

एकहस्तेकाकपक्षमुलूकस्यतथापरे ॥
मंत्रयित्वामिलित्वाग्रंकृष्णसूत्रेणबंधयेत् ॥
अञ्जलिञ्चजलेचैवतर्पयेद्धस्तपक्षकैः ॥ ७ ॥

एवंसप्तदिनंकुर्यादष्टोत्तरशतंजपेत् ॥
विद्वेषोजायतेतत्रमहाकौतुकमद्भुतम् ॥
मार्जारमूषिकाविष्ठासाध्यपुत्तलिकाकृता ॥ ८ ॥
नीलवस्त्रेणसंवेष्टयमंत्रयित्वाशतेनच ॥
विद्वेषोजायतेतत्रभ्रातरौतातपुत्रकौ ॥ ९ ॥
मन्त्रस्तु॥"ॐनमोमहाभैरवायश्मशानवासि
न्यैअमुकामुकयोर्विद्वेषंकुरुकुरुक्रूंफट्" ॥
एकहस्तेकाकपक्षमुलूकस्यतथापरे ॥
दर्भेणधारयेद्यत्नात्त्रिसप्ताहंजलाञ्जलिम् ॥ १० ॥

अथ विद्वेषण।एकहाथमें काकपक्ष दूसरेमें उल्लूका ले मंत्रसे इनको मिलाय काले सूत्रसे बांधे और जलसे पक्षको सातदिन तर्पणकर १०८ वारजपै विद्वेषण होगा--बिलाव और मूषकी विष्ठासे साध्यकी पुतली बनावै नीले वस्त्रसे लपेट सौवार मंत्र पढे तौ भ्राता पिता पुत्रमें विद्वेषहो 'ॐनमो महाभैरवाय श्मशानवासिन्यै असुकामुकयोर्विद्वेषं कुरु २ क्रूंफट् २, एकहाथमें काक दूसरेमें उल्लूका पंखले कुशके साथ तीनसप्ताहतक जलकी अंजली धारणकरे ॥ १० ॥

रक्ताश्वमारपुष्पैकंमंत्रयुक्तंजलांजलिम् ॥
नित्यंनित्यंप्रदातव्यमष्टोत्तरसहस्रकम् ॥
परस्परंभवेद्द्वेषःसिद्धयोगउदाहृतः ॥ ११ ॥

लालकनेरका फूल एक लेकर मंत्र पढकर हाथमें जलकी अंजली धारण करे और एक सहस्र आठ यह नित्य अंजलीदे तौ परस्पर द्वेष होजाताहै, यह सिद्धयोग कहाहै ॥ ११ ॥

"ॐनमःकटीटनीप्रमोटनीकीगौरीगौरीअमुकस्या-
मुकेनसहकाकोलूकादिवत्कुरुकुरुस्वाहा" ॥

'ओंनमो मोटकी प्रमोठकी गौरी अमुकस्यामुकेन सह काकोलूकादि वत्कुरुकुरु स्वाहा' । यह जलांजलिका मंत्र है ॥

## अथव्याधिकरणम् ॥

"ॐअमुकंहन् २ स्वाहा" ॥अनेनमंत्रेण ॥
कटुतैलाक्तंत्रिकटुम् जुहुयात्तदाशत्रुर्बधिरोभवति ॥
भल्लातकरसोगुंजाकुर्य्यान्नातिसुचूर्णितम् ॥
क्षिपेद्गात्रेभवेत्कुष्ठंसिताक्षीरंपिबेत्सुखी ॥ १२ ॥

अथ व्याधिकरणम् ॥ 'ॐअमुकं हन हन स्वाहा,' इस मंत्रसे कडुवेतेलके साथ त्रिकुटेका हवन करनेसे शत्रु बहरा, होजाता है भिलावेका रस और गुंजा इनका बहुत चूर्ण न करके जिसके शरीर पर फेंके वह कुष्ठी होताहै, फिर मिश्री और दूध पीनेसे सुखी होताहै ॥ १२ ॥

वानरीफलरोमाणिविषंभल्लातचूर्णकम् ॥
गुंजायुतंक्षिपेद्गात्रेस्याल्लूतावेदनान्विता ॥ १३ ॥

कौंचकी फलीके रोम विष भिलावेका चूर्ण उसमें चौंटली मिलाकर जिसके शरीर पर डालदे उसके महापीडा युक्त मकरी के फैलनेकी समान वेदना होतीहै ॥ १३ ॥

उशीरश्चन्दनंचैवप्रियंगुंरक्तचन्दनम् ॥
तगरंपेषयेत्तोयैर्लेपाल्लूतादिनाशनम् ॥ १४ ॥

खस चंदन और तगर यह जलसे पीसकर लगावै तौ लूता की वेदना शान्त होजाय ॥ १४ ॥

अथज्वरानयनं ॥ "ॐचामुण्डेहनहन दह २
पचपच मथ २ चलह २ अमुकं गृण्ह २
स्वाहा" ॥ अनेनकटुतैलेमाक्तनिम्बपत्राणि

यस्यनाम्नाहूयन्तेतस्यशीघ्रंज्वरोभवति ॥
चित्रकपुष्पसहस्त्रंहुनेच्चातुर्थिकज्वरोभवति॥
लवणमष्टाधिकसहस्त्रंहुनेद्दाहज्वरोभवति ॥ १५ ॥

अथ ज्वरानयन 'चामुंडे हन२ दह दह पच पच मथ २ चल्ह २ अमुकं गृह्ण गृह्ण स्वाहा' यह मंत्र पढ़कर कडुवेतेल के साथ नीमके पत्ते जिसके नाम लेकर हवन कियाजाय उसको तत्काल ज्वर होता है; चीतेकी फूल सहस्र हवन करनेसे चातुर्थक ज्वर होता है; एक सहस्र आठवार लवण हवन करनेसे दाहज्वर होता है; १५

इति ज्वरानयनम् ।

---

## अथाक्षिरोगजननम् ॥

करवीरंपुष्पमष्टसहस्त्रमुक्तमंत्रहुनेत्
अक्षिरोगंभवति ॥
स्नुक्पयस्तेनपानेनलेपनंश्वेतकुष्ठजित् ॥
ताम्बूलेइन्द्रगोपश्चदत्वासौश्वेतकुष्ठकृत् ॥
पीत्वायत्नेयथापूर्वम्भक्षेद्वासोमराजिकाम् ॥
"ॐनमोभगवतेरुद्रायउड्डामरेश्वरायअमुकंरोगेणगृह्ण २ पच २ ताडय २ छेदय २ हूंफट्स्वाहा ठःठः"
उक्तयोगानामयंमंत्रः ॥
क्षिपेन्मृगशिरर्क्षेतितुषुंकाष्ठस्यकीलकम् ॥
पंचागुलंरिपोर्गेहेवाह्निमांद्यंप्रजायते ॥ १६ ॥

नेत्ररोग उत्पन्न करना । आठ सहस्र कनेरके फूल हवन करनेसे नेत्ररोग होता है । थूहरके दूधके लेप वा पानसे श्वेत कुष्ठ दूर होता है अथवा ताम्बूलमें वीरबहूटी खाय तौ कुष्ठहो फिर सोमराजीके

पानसि श्वेतकुष्ठ दूर होता है मंत्र यहहै 'ॐनमो भगवते रुद्राय उड्डामरेश्वराय अमुकं रोगेण गृह्ण २ पच २ ताड़य २ छेदय २ हूं फट् ठःठः' उपरोक्त योगका यह मंत्र है, मृगशिरनक्षत्रमें पांच अंगुल तेंदूवृक्षके काठकी कील शत्रुके घरमें डालनेसे रोग होता है ॥१६॥

सामुद्रंलवणंवह्निःकेवलंवासमुद्रजम् ॥
बन्धक्याउदरेन्यस्तंसर्वमंतःपुटैर्दहेत् ॥ १७ ॥

समुद्रलवण चीता अथवा केवल सेंधानोन बन्धकीमें रखकर सब अन्तरपुटसे जलादे ॥ १७ ॥

करवीरार्द्रकाष्ठेनतमादायसुचूर्णयेत् ॥
खानेपानेर्पयेद्यस्यतस्यचक्षुःप्रणश्यति ॥ १८ ॥

कनेरके गीलेकाष्ठद्वारा उसको लेकर चूर्णकरे जिसके खान पानमें डालदे उसके नेत्र नाश होजाते हैं ॥ १८ ॥

उलूकमस्तकंग्राह्यंलवणेनप्रपूरयेत् ॥
सप्ताहंमृत्पात्रस्थमक्षिकाष्ठेनचालयेत् ॥ १९ ॥

उल्लूकामस्तक लेकर लवणसे पूर्ण करे सातदिनतक मट्टीके पात्रमें रखकर बहेड़ेकी मालासे जपकरे ॥ १९ ॥

दृष्टिस्तंभयितुंतस्यमरिचाक्षफलंवचा ॥
"ॐचामुण्डेहन २ दहदह पच २ अमुकंगृह्णगृह्णस्वाहा" ॥
अनेनमंत्रेणानिम्बपत्रकटुतैलसाध्यनामगृहीत्वाजुहुयात्स ज्वरेणगृह्यते ॥ अनेनलवणाहुतीरष्टसहस्रंजुहुयात्सशूलेनगृह्यते ॥ २० ॥

दृष्टिके स्तंभ करनेको कालीमिर्च बहेड़ेका फल और वचहै, 'ॐचामुंडे हन हन दह२पच२अमुकं गृह्ण २स्वाहा' इस मंत्रसे नीमके पत्ते लेकर कडुवे तेलद्वारा साध्यका नाम लेकर हवन करनेसे ज्वरसे

ग्रसितहोता है; इसी मंत्रसे लवणकी आहुति अष्टोत्तर सहस्र हवन करनेसे शूलसे ज्वरसे ग्रसितहोता है ॥ २० ॥

तेनैववेत्रपत्रमष्टसहस्रंजुहुयात्सचतुर्थज्वरेणगृह्यते ॥
रक्तपुष्पंचित्रकरसेनयस्यनामाभिलिख्यभूर्जे
अर्कलतिकायांस्थापयेत्सदाहज्वरेणगृह्यते ॥
"ॐनमःश्रीनृसिंहायदेवायदनुगारयैनमःकृष्णाय" २१

और बेलपत्र आठसहस्र हवन करनेसे चातुर्थिकज्वरसे ग्रसित होताहै; लालफूल और चीतेके रससे जिसका नाम लिख भोजपत्रको आककी बेलपर नामका दे उसे दाहज्वर होगा ' ॐनमः श्रीनृसिंहाय देवायदनुगारयैनमः कृष्णाय ॥ २१ ॥

## अथशत्रुद्रावणम् ॥

अश्वत्थकीलमाश्विन्यांयस्यगेहेदशांगुलम् ॥
स्थापयेद्दीर्घयात्रास्यात्तस्यापिनहिसंशयः ॥ २२ ॥

अथ शत्रु द्रावणम् ॥ जिसके घरमें अश्विनी में पीपलकी कील दश अंगुलकी स्थापन करदे उसकी दीर्घ यात्राहो और द्रावित भी होगा इसमें संदेह नहीं ॥ २२ ॥

शृगालस्यास्थिकीलकंस्थाप्यंस्याच्चतुरंगुलम् ॥
रिपोर्गेहेसोमऋक्षेदीर्घयात्राचतस्यवै ॥ २३ ॥

गीदडकी अस्थि चार अगुंलकी स्थापन करै अर्थात् सोमदेवताके नक्षत्र मृगशिरमें शत्रु के घरमें स्थापन करनेसे दीर्घयात्रा होजायगी इसमें संदेह नहीं ॥ २३ ॥

## अथउन्मत्तीकरणम् ॥

तालकंधूत्तंबीजञ्चघनचूर्णन्तुभक्षयेत् ॥
दत्तोन्मत्तोभवेच्छत्रुःसिताक्षीरैःपुनःपुनः ॥ २४ ॥

अथ उन्मत्तीकरणम् ॥ हरताल धतूरेके बीज मोथेका चूर्ण देतेही शत्रु उन्मत्त होजाताहै फिर मिश्री और दूध पीनेसे सुखी होता है ॥ २४ ॥

सुखीतालकंलशुनंमूर्ध्निक्षिप्तंयस्यपिशाचकृत् ॥
सुरामांसीसिताक्षीरंभक्षणाच्चसुखावहम् ॥ २५ ॥

हरताल और लहसन जिसके ऊपर डालाजाय वह पिशाचतुल्य होजाताहै । सुरा मांस सिता ( मिश्री ) दूध पान करनेसे उसी समय सुखी होता है ॥ २५ ॥

मध्वाज्याभ्यांस्वर्णमाक्षींपिष्ट्वातत्कृतकज्जलम् ॥
दत्तंयस्यांजनंनेत्रे उन्मत्तोसौप्रजायते ॥ २६ ॥

मधु घृत सोनामक्खी इनको पीसकर इसका काजर कर सुरापानमें डालकर जिसको दे वह उन्मत्त होजाता है ॥ २६ ॥

गोघृतंसैंधवंतुल्यंवराहस्यतुपित्तकम् ॥
अजाक्षीरेणसंयोज्यंपानेनोन्मत्तनाशनम् ॥ २७ ॥

गौका घी सेंधा यह बराबर ले बाराहका पित्त बकरीके दूधके साथ सेवन करनेसे उन्मत्तपन नाश होजाता है ॥ २७ ॥

मयूरपारावतकुक्कुटानांग्राह्यंपुरीषंकनकंचतालम् ॥
तन्मूर्ध्निदत्तंकुरुतेपिशाचान्निवर्त्तेनमुंडितमस्तकेन ॥ २८ ॥

मोर कुक्कुः ( मुरगा ) कबूतरकी बीट ग्रहणकर धतूरे हरतालके सहित शिरपर डालनेसे वह प्राणी पिशाचवत् होजाता है फिर शिर मुडानेसे सुखीहोता है ॥ २८ ॥

गुडंकरंजबीजंचघनचूर्णसमंसमम् ॥
फलस्यांतेप्रदातव्यं उन्मत्तोभक्षणाद्भवेत् ॥ २९ ॥

गुड करंजुएके बीज मोथेका चूर्ण यह समानभाग लेकर फलमें देतो भक्षण करतेही उन्मत्त होजाता है ॥ २९ ॥

शर्क्कराशतपुष्पाज्यक्षीरपानेसुखावहम् ॥ ३० ॥

शक्कर सोंफ घृत दूध इनका पान करनेसे सुखी होता है ॥३०॥

" ॐनमः उन्मत्तकारिणिविद्येठःठः " ॥

उक्तयोगानामयमेवमंत्रः ॥३१॥

इत्युन्मत्तीकरणाम् ॥

'ॐनमःउन्मत्तकारिणे विद्ये ठःठः' पूर्वोक्त योगोंका यही मंत्र है ३१

इति उन्मत्तीकरणम् ॥

---

## अथमारणम् ॥

नरास्थिकीलकंपुष्येगृह्णीयाच्चतुरंगुलम् ॥

निखनेद्यस्यगेहेतुभवेत्तस्यकुलक्षयः ॥ ३२ ॥

पुष्यनक्षत्रमें मनुष्यकी आस्थिकीलक चार अंगुलकी ग्रहणकर जिसके घरमें गाडदे उसका कुलक्षय होजाता है ॥ ३२ ॥

"ॐ ह्रूं ह्रींफट्स्वाहा" ॥

अश्वास्थिकीलमश्विन्यांनिखनेच्चतुरंगुलम् ॥

शत्रुगेहेनिहत्याशुकुटुम्बम्वैरिणांकुले ॥ ३३ ॥

हुंहुंफट्स्वाहासप्ताभिमंत्रितंशत्रुगेहेनिखनेकुलंक्षयंयाति

'ॐ ह्रीं फट् स्वाहा,' १००० जपसे सिद्धि घोडेकी अस्थिकील चार अंगुलकी अश्विनीनक्षत्रमें ग्रणकर शत्रुके घरमें गाडनेसे वैरीकि कुलका नाश होजाता है हुंहुं फट् स्वाहा इससे सातवार मंत्र पढकर गाडै कुलक्षयहो ॥ ३३ ॥

"ॐसुरेश्वरे स्वाहा" ॥

सर्पास्थ्यंगुलमेकन्तुआश्लेषायांरिपोर्गृहे ॥

निखनेत्सप्तधाजप्तंमारयेद्रिपुसंततिम् ॥ ३४ ॥

'ॐ सुरेश्वरायस्वाहा' आश्लेषानक्षत्रमें सांपकी हड्डी एकअंगुल की लेकर शत्रुके घरमें गाड़नेसे शत्रुके सन्तानका नाश हो जाता है ॥ ३४ ॥

"ॐसींशोषणेस्वाहा" ॥

निम्बषड्बिन्दुकौंयाह्यौविषंत्वग्वानरीफलम् ॥
एतच्चूर्णप्रदातव्यंशत्रुशय्यासनादिषु ॥ ३५ ॥

'ॐ सीं शोषणे स्वाहा' नीम षड्बिन्दु विष कौंचके फल और छाल इनका चूर्ण शत्रुकी शय्या आसनादिमें प्रदान करेतो ॥ ३५ ॥

जायन्तेस्फोटकास्तीव्रादशाहान्मरणंभवेत् ॥
स्नानभूमूत्रभूमृत्स्नासर्पवक्त्रेविनिःक्षिपेत् ॥ ३६ ॥

तीव्र स्फोटक होजाते हैं; जिससे दशही दिनमें मरण होजाता है, स्नानस्थान मूत्रस्थान की मट्टी सर्पके मुखमें डालदे ॥ ३६ ॥

वेष्टयेत्कृष्णसूत्रेणमार्गमध्येअधोमुखम् ॥
निखनेन्म्रियतेशत्रुस्समुत्थानेसुखीभवेत् ॥ ३७ ॥

काले सूत्रसे वेष्टित करके मार्गके मध्यमें नीचेको मूखकर डाले तो शत्रु मरने लगताहै और उखाडनेसे सुखी होताहै ॥ ३७ ॥

वामदंतंकुलीरस्यअधोभागस्यचाहरेत् ॥
शराग्रेफलकंकुर्य्याद्रिपुरुचचितिजेन्धनैः ॥ ३८ ॥

कैंकड़के नीचेके भागका बायां दांत लावे, उसको बाणके आगें फलमें लगावे और सावधानीसे रक्षाकरे ॥ ३८ ॥

गवाशिरांगुलंकृत्वाशत्रुंकुर्य्याच्चमृन्मयम् ॥
तद्वज्जातेनबाणेनाम्रियतेतत्क्षणाद्रिपुः ॥ ३९ ॥

गवा शिर अंगुल मट्टीकी शत्रुकी मूर्ति बनावै वह उस बाणके प्रहार करतेही उसी समय शत्रु मरजाताहै ॥ ३९ ॥

आर्द्रायांनिम्बवन्दाकंशत्रोःशयनस्थानके ॥
निखनेन्म्रियतेशत्रुरुद्धृतेचपुनःसुखी ॥ ४० ॥
स्तथाशिरीषवन्दाकंपूर्वोक्तेनोडुनाहरेत् ॥
शत्रोर्गेहेस्थापयित्वारिपोर्नाशोभविष्यति ॥ ४१ ॥

आर्द्रानक्षत्रमें नीमका वन्दा लाकर शत्रुके शयनस्थानमें गाडनेसे शत्रु मरजाताहै,उखाडनेसे सुखी होताहै इसी प्रकार शिरसका वन्दा-लाकर शत्रुके घरमें स्थापन करनेसे शत्रुका नाश होजाताहै ॥४१॥

ऊर्णनाभिश्चषड्बिन्दुःसमांसंकृष्णवृश्चिकम् ॥
यस्यांगेतत्क्षिपेच्चूर्णंसप्ताहात्स्फोटनम्भवेत् ॥ ४२ ॥

ऊर्णनाभ षड्बिन्दुकीट और उसकी बराबर काले वृश्चिकका चूर्णकर जिसके शरीरमें डाले सातदिनमें फोडे होजाते हैं ॥४२ ॥

मयूरपुच्छंनीलाब्जंपिष्ट्वालेपैःसुखावहम् ॥
रिपुविष्ठांवृश्चिकंचखनित्वाभुविनिःक्षिपेत् ॥ ४३ ॥
आच्छाद्यप्रावरेणाथतत्पृष्ठेमृत्तिकांक्षिपेत् ॥
म्रियतेमलरोधेनउद्धृतेचपुनःसुखी ॥ ४४ ॥
"ॐह्रींक्षःअमुकंक्षं" । अनेनमंत्रेणराजिकालवणेनशिव
निर्माल्यानिकटुतैलेनसहस्रहोमात् शत्रोर्वधः ॥ ४५ ॥

फिर वह मोरपिच्छ नीलकमलका लेप करनेसे सुखीहोताहै॥ वृश्चिक और शत्रुकी विष्ठापृथ्वीमें खोदकर डालदे शत्रुका मल रुक जायगा वह मृत्यको प्राप्त होगा उखाडनेसे सुखीहोगा 'ॐ ह्रीं क्षः अमुकं क्षं' इसमंत्रसे राई नोन शिवनिर्माल्य कटु तेलके साथ सहस्र आहुती देनेसे शत्रुका.वध होताहै ॥ ४५ ॥

इति मारणम् ॥

---

# अथ अश्वनाशनम् ॥

कृष्णजीरकचूर्णेनरंजितेश्वोनपश्याति ॥
तक्रेणक्षालयेच्चक्षुःसुस्थोभवतिघोटकः ॥ ४६ ॥

काले जीरेका चूर्ण आंखमें डालनेसे घोडा अंधा होजाताहै, फिर मट्ठेसे आखैं धोनेसे स्वस्थ होजाताहै ॥ ४६ ॥

घ्राणेछुछुन्दरीचूर्णदत्तेपततिघोटकः ॥
सुस्थश्चन्दनपानेननश्यंप्राप्यनसंशयः ॥ ४७ ॥

छछूंदरका चूर्ण सुंघातेही घोड़ा गिरजाता है; फिर चंदनकी न्यस्य देनेसे वा पान करनेको देने से स्वस्थ होजाता है इसमें सन्देह नहीं ॥ ४७ ॥

अश्वास्थिकीलमश्विन्यांकुर्य्यात्सप्तांगुलंपुनः ॥
निखनेदश्वशालायांमारयत्येवघोटकान् ॥ ४८ ॥
भरण्यामुक्तमंत्रेणचितिकाष्ठस्यकीलकम् ॥
अष्टाङ्गुलन्तुनिखनेदश्वशालाविनश्याति ॥ ४९॥
" ॐनमोभगवतेरुद्रायॐअश्वान्हनरस्वाहा
ॐपचपचस्वाहा"इत्यश्वनाशनम् ॥

अश्विनीनक्षत्रमें घोडेकी अस्थि की कील सात अंगुलकी बनावै वह अश्वशाला में गाडने से घोडा मर जाता है यही भरणीका फल है । चितिकाष्ठ की अष्टांगुल कीलक अश्वशालामें गाडनेसे घुडसाल नष्ट होतीहै मंत्र यह है'ॐ पच पच स्वाहा'४८।४९

इति अश्वनाशनम् ।

## अथसस्यनाशनम् ॥

पुनर्वसौचितिकाष्ठकीलकंत्र्यङ्गुलंक्षिपेत् ॥
शताभिमंत्रितंक्षेत्रेसस्यंतत्रविनश्यति ॥ ५० ॥

पुनर्वसुनक्षत्रमें चितिके काष्ठकी कीलका तीन अंगुलके प्रमाणका सौवार अभिमंत्रित कर खेतमें डालनेसे खेती नष्ट होजातीहै५०॥

"ॐलोहितमुखेस्वाहा" ॥

आर्द्रायांनिःक्षिपेत्कीलंभल्लूकस्यास्थिसंभवम् ॥
क्षेत्रमध्येतदाशत्रोस्सस्यंसर्वंविनश्यति ॥ ५१ ॥

'ॐ लोहितमुखेस्वाहा' यह मंत्र है आर्द्रानक्षत्रमें भल्लूकी अस्थिकी कील शत्रुकी खेतीमें डालदे तौ सब खेती नष्ट होजातीहै५१

विशाखायांकालिकाष्ठकीलमष्टांगुलंक्षिपेत् ॥
कदलीवाटिकामध्येनाशयेत्कदलीफलम् ॥ ५२ ॥

विशाखानक्षत्रमें बेरीके काष्ठकी आठ अंगुल कील कदलीकी वाटिकामें डालनेसे केलेकी फली नष्ट होजातीहै ॥ ५२ ॥

इति सस्यनाशनम् ।

## अथरजकस्यवस्त्रनाशनम् ॥

पूर्वाफाल्गुनिनक्षत्रेजातिकाष्ठस्यकीलकम् ॥
अष्टांगुलप्रमाणंतुनिखनेद्रजकगृहे ॥
शताभिमंत्रितंतेनतस्यवस्त्राणिनाशयेत् ॥ ५३ ॥

"ॐकुम्भस्वाहा" ॥

इति रजकस्यवस्त्रनाशनम् ।

धोबी के वस्त्र नष्ट करना । पूर्वाफाल्गुनीनक्षत्रमे जायफलकाठकी

कील आठ अंगुल प्रमाणकी सौ वार अभिमंत्रित कर धोबी के घरमें गाडनेसे रजकके वस्त्र नष्ट होजातेहैं 'ॐकुंभस्वाहा'॥ ५३ ॥

## अथधीवरस्यमत्स्यनाशनम् ॥

इतिरजकस्यवस्त्रनाशनम् ॥

संग्राह्यपूर्वफाल्गुन्याम्बदरीकाष्ठकीलकम् ॥
अष्टाङ्गुलंचनिखनेन्नाशयेद्धीवरगृहे ॥ ५४ ॥
" ॐजलेस्वाहा ॥ ॐमत्स्यिस्वाहा" ॥
मंत्रद्वयस्यतुल्यंफलम् ॥
सप्तांगुलम्मघाऋक्षेभल्लातंकाष्ठकीलकम् ॥
गृहीत्वादासगेहेतुदेयंमत्स्यान्विनाशयेत् ॥ ५५ ॥

पूर्वाफाल्गुनीनक्षत्रमें बेरीकी लकड़ी आठ अंगुलकी ग्रहणकर धीवरके घरमें गाडनेसे मच्छियोंका नाश होजाता है 'ॐज्वल २ स्वाहा अथवा जलेस्वाहा ॐमत्सिकास्वाहा' । अथवा मघानक्षत्रमें सात अंगुलका भिलावेका काष्ठ धीवरके घरमें गाडनेसे मच्छियों का नाश होजाता है ॥ ५५ ॥

कृत्तिकायामर्ककाष्ठंकीलकंत्र्यंगुलंक्षिपेत् ॥
शत्रोर्वापीह्रदादौचमत्स्यस्तत्रविनश्यति ॥ ५६ ॥

कृत्तिकानक्षत्रमें आककी लकड़ी तीन अंगुलकी लेकर शत्रु धीमरके बावडी वा ह्रदादिमें डालनेसे उसमेंकी मछली नष्ट हो जाती है ॥ ५६ ॥

इतिकैवर्त्तनाशनम् ॥

## अथकुम्भकारस्यभाण्डनाशनम् ॥

हस्तेवैअंगुलंकीलंकरवीरस्यकाष्ठजम् ॥

निखनेत्कुम्भकारस्यशालायांभाण्डनाशकृत् ॥ ५७ ॥

कुम्भकारके बरतनोंका नाश करना. । हस्तनक्षत्रमें तीन अंगुलकी लकड़ी लेकर कुंभारके घरमें गाड़नेसे उसके बरतन टूट जाते हैं ॥ ५७ ॥

पंचांगुलंनिम्बकीलंतद्दक्षेपूर्ववत्फलम् ॥
गोक्षुरंमेषशृंगंचबीजंवाकोकिलाक्षकम् ॥ ५८ ॥
शूकरस्यमलंवाथमूलम्वाश्वेतगुंजकम् ॥
पाकस्थानेतुभांडानांक्षिप्तंस्फोटयतेध्रुवम् ॥ ५९ ॥
तालंकरंजबीजंचटंकणेनसमन्वितम् ॥
कृत्वाभांडास्स्फुटंत्येवउक्तानांमंत्रउच्यते ॥ ६० ॥

अथवा पूर्वोक्त नक्षत्रमें पांच अंगुल नीमकी कील गाड़नेसे पूर्ववत् फल होता है. गोखरू मेढासींगी तालमखाने शूकरका मल अथवा श्वेत चौंटलीकी जड़ डालनेसे अवश्य बरतन फूट जाते हैं; हरताल और करंजके बीज सुहागा यह सब वस्तु डालनेसे अवेके बरतन टूट जाते हैं ॥ ६० ॥

"ॐमदमदस्वाहा ॥ ॐगुरुहरस्वाहा" ॥

अथवा "ॐदमन्यदमन्यस्वाहा" मंत्रत्रयस्यतुल्यंफलम्

'ॐमद मद स्वाहा ॐ गुरु हर स्वाहा' इन दोनों मंत्रोंका बराबर फल है ॥

इति कुंभकारस्यभाण्डनाशनम् ।

---

अथतैलिकस्यतैलनाशनम् ॥

मधुकस्यतुकीलन्तुचित्रायांचतुरंगुलम् ॥
निखनेत्तैलशालायांतैलंतत्रविनश्यति ॥ ६१ ॥

तेलीका तेलनाशकरना । चित्रानक्षत्रमें चार अंगुल मुलैठीकी कील कोलके स्थानमें डालनेसे तेल नष्ट होजाता है ॥ ६१ ॥

"ॐदहदहस्वाहा" सहस्रजपः ॥
भल्लातकाष्ठंचित्रायांनिखनेत्तैलिकेगृहे ॥
अष्टांगुलंतदातत्रग्राहकोनहिगच्छति ॥ ६२ ॥

'ॐ दह दह स्वाहा' । सहस्र जपकरै भिलावेकी लकड़ी चित्रानक्षत्रमें आठ अंगुलकी गाड़दे तौ उसके यहां कोई ग्राहक नहीं जाता ॥ ६२ ॥

अथ गोपानांगवांक्षीरनाशनम् ॥
निःक्षिपेदनुराधायांजम्बूकाष्ठस्यकीलकम् ॥
अष्टांगुलंगोपगेहेगोदुग्धंचविनश्यति ॥ ६३ ॥

ग्वालियोंकी गऊका दूध नाशकरना । अनुराधानक्षत्रमें जामुन की कील आठ अंगुलकी घोसीके घरमें डालनेसे उसका दूध नष्ट होजाता है ॥ ६३ ॥

अथ वारिजस्यपर्णनाशनम् ॥
नवांगुलंपूगकाष्ठकीलकंनिःक्षिपेद्गृहे ॥
तांबूलिकस्यक्षेत्रेवाऋक्षेशतभिषाह्वये ॥
तदातस्यचताम्बूलंनाशमायातिनिश्चितम् ॥ ६४ ॥

तंबोलीके पत्ते नाशकरने।नौ अंगुल की सुपारीके काठकी कील शतभिषानक्षत्रमें तंबोलीके घरमें डालनेसे अवश्य ताम्बूलोंका नाश होजाता है ॥ ६४ ॥

## अथशाकनाशनम् ॥

गन्धकंचूर्णकंतत्राक्षिपेज्जलयुतेनवै ॥
नश्यन्तिसर्वशाकानिशेषान्यल्पबलानिच ॥ ६५॥

गंधकका चूर्ण जलके साथ डालनेसे खेतमेंसे सर्व शाक नष्ट होजाते हैं क्रमसे सूख जायगा ॥ ६५ ॥

## तन्तुवायस्यसूत्रनाशनम् ॥

अश्विन्यांजांबिरंकाष्ठंतन्तुवायगृहेक्षिपेत् ॥
द्वादशांगुलमानन्तुसूत्रन्तत्रविनश्यति ॥ ६६ ॥

अथ तंतुवायस्य सूत्रनाशनम् ॥ अश्विनीनक्षत्रमें बारह अंगुल जम्बीरीकी कील जुलाहेके घरमें डालनेसे उसके तागे नष्ट होजातेहैं

## अथ शौंडिकस्यमदिरानाशनम् ॥

कृत्तिकायामर्ककाष्ठंषोडशांगुलकंक्षिपेत् ॥
शौंडिकस्यचगेहेचमदिरातत्रनश्यति ॥ ६७ ॥

कृत्तिका नक्षत्रमें आककी लकड़ी सोलह अंगुल कलालके घरमें डालनेसे उसकी मदिरा नष्ट होजाती है ॥ ३७ ॥

## अथ कर्मकारस्यलोहनाशनम् ॥

रोहिण्यांबदरीकाष्ठंकीलमेकादशांगुलम् ॥
कर्मकारगृहेक्षिप्तंलोहंतप्तंभवेन्नहि ॥ ६८ ॥

लुहारका लोहनाशन ॥ रोहिणीनक्षत्रमें बेरीके काष्ठकी ग्यारह अंगुलकी कील लुहारके दुकानमें गाड़नेसे लोहा तप्त नहीं होताहै ६८

इतिकर्मकारस्य लोहनाशनम् ॥

---

अत्रंपारीशसंभ्रमकायवेधछेदकज्ञानविज्ञाननाफूटै ॥

---

१ दूसरी लिपिमें इस प्रकारहै ॥अबपारीस संभ्रम कायवेध छेदका ज्ञान विज्ञान फुटै अमुकारगाय ह्रंकाचण्डीतो इमोरमाशिल पाथरपरै अमुकार गासे मारैससमारै मुमारै रौडांब उलटावेधे विरूपाक्ष विराली उलटावेधे पिण्डोमानीपै।मोरे पिंडेकरे घाउलटावेधे डांकतुलखाः फोड़२दंडी विरूपाक्षरे आज्ञा वारत्रय पडिआ प्रातकाल तीन गंडूष पानी पियै ॥

अमुकारकायंहूंकलिकाचंडीतुंइमोरमाशिलपाथरपडे अमुकारगामेमारेससमरैपुत्रीमारौंतारकउलटावेधेविरू पाक्षंरिवानीउलटावेधेपित्रपानीजेमोरापिंडेकरेघाउल टावेधेताकताकतुजीखाफोटफोटदंण्डीविरूपाक्षेरआ ज्ञावारत्रयंपठित्वाप्रतिप्रातः ॥ त्रिगंडूषजलंपेयंयदि केनापिविद्धंस्यात् ॥ शरीरन्तदैवतेनकार्य्यमिति६९॥

इतिश्रीकामरत्नेनित्यनाथविरचितेउच्चाटनादिकर्म्मकारलो हनाशनंनामदशमोपदेशः ॥ १० ॥

मंत्र–अमु पानीरा शम्भुकाय वेष छेदक ज्ञान विज्ञाननाफूटै अमुकारकायं ह्रं कलिका चंडीतु इमोरमा शिल पाथरपड़े अमुकार गामैं नारै ससमरै पुत्री मारौं तारक उलगैं वेधे विरूपाक्ष रिवा- नी उलटावेधे पित्र पानी जो मोर पिंड़े करै घा उलटा वेध ताक ताकतुजी खा फोट फोट दण्डी विरूपाक्षेर आज्ञा यह तीन वार प्रति प्रातःकाल पढ़ै और तीन घूंट जलपिये जो किसीसे विद्ध हो तो शरीरका वेध छूट जाता है ॥ ६९ ॥

इतिश्री कामरत्ने नित्यनाथविरचिते भाषाटीकायां उच्चाटनादि कर्मकारलोहनाशनं नाम दशमोपदेशः ॥ १० ॥

---

# अथ नानाकौतुकम् ॥

शिखिनस्तुशिखाचूर्णभोजयेद्दिनसप्तकम् ॥
तद्विष्टालिप्तहस्तस्यद्रव्यंशक्रोतितत्क्षणात् ॥ १ ॥

मोरको मोरकी शिखा ( कलिहारी ) काचूर्ण सात दिनतक भोजन करावै उसकी विष्ठासे हाथ लपेटनेसे तत्काल द्रव्य लुप्तरूप हो जाता है ॥ १ ॥

सप्ताहंतिलतैलेनभावयेदातपेखरे ॥

अंकोलिबीजचूर्णन्तुयोज्यंपेष्यंपुनःपुनः ॥ २ ॥

सात दिनतक तिलके तेलसे ढेराके बीजोंकी चूर्णको भावना देकर धूपमें सुखावे और वारंवार सुखाय पीसे ॥ २ ॥

तत्तैलंग्राहयेद्यत्नात्तैलकारस्ययन्त्रतः ॥
अथवाकांस्यपात्रेद्वेतेनकल्केनलेपयेत् ॥ ३ ॥

उसके तेलको कोलमें पिलवा ले अथवा कांसीके दो पात्र उसके कल्कसे लेप करै ॥ ३ ॥

उत्थाप्यस्थापयेद्धर्मेसंमुखन्तुपरस्परम् ॥
तयोरधःकांस्यपात्रेपतितंतैलमाहरेत् ॥ ४ ॥

फिर इसको उठाकर धूप में रक्खे और सामने रक्खे उसके नीचे कांसीका बरतन रखदे, उसमें जो तेल गिरे उसे ग्रहण करले ॥ ४ ॥

इदमेवाङ्कुलीतैलंसिद्धंसर्वत्रयोजयेत् ॥
लिप्तमंगुलितैलेनमंडितंतत्क्षणाद्दिशेत् ॥ ५ ॥

यह तेल सिद्ध और सब कार्ययोगोंमें प्रयोग करै उँगली में तेल लगाकर फेरनेसे उसी समय मंडन होताहै ॥ ५ ॥

सफलोजायतेवृक्षस्तत्क्षणान्नात्रसंशयः ॥
पद्मिनीबीजचूर्णन्तुभाव्यमङ्कुलितैलतः ॥ ६ ॥

वृक्षपर लगानेसे उसी समय वृक्ष सफल होजाता है इसमें संदेह नहीं एक अंगुली तेल कमलगट्टेमें लगानेसे ॥ ६ ॥

न्यस्तंजलेमहाश्चर्य्यस्तत्क्षणात्पद्मसंभवः ॥
यानिकानिचबीजानिजलजस्थलजानिच ॥ ७ ॥

जलमें रखनेसे उसी समय कमलकी उत्पाति होजातीहै, जितने जलस्थलके वृक्षोंके बीज हैं ॥ ७ ॥

अङ्गुलीतैललिप्तानितानितान्युद्भवन्तिच ॥
यत्किञ्चित्काण्डमूलोत्थंपत्रपुष्पफलादिकम्॥ ८॥

एक अंगुलीमात्र तेल लगानेसे उसी समय जमजातेहैं,जो कुछ काण्डमूलसे उठे हुए पत्र पुष्प फल आदिक हैं ॥ ८ ॥

अङ्गुलीतैललिप्तन्तुतुल्यरूपंभवेद्ध्रुवम् ॥ ९ ॥

अँगुलीसे तेलमात्र लगादेनेसे मुंडितरूप निश्चय हो जाताहै ९

गुंजाफलांबुपिष्टंचलेपयेत्पादुकाद्वयम् ॥
विनाक्लेशंनरोगच्छेत्क्रोशमेकंनसंशयः ॥ १० ॥

जलमें चौंटली पीसकर उसका लेप खड़ाउओंपर करनेसे पैर धोकर उसके ऊपर मनुष्य चढकर एक कोश जा सकता है इसमें संदेह नहीं ॥ १० ॥

लघुदारुमयंपीठंगुंजापिष्टेनलेपयेत् ॥
शुष्कमन्तर्जलैस्सार्द्धमुपविष्टंनमज्जति ॥ ११ ॥

छोटी काठकी चौंकीको चौटली पीसकर लेपित करे सुखाकर जलमें चौकीपर बैठनेसे चौंकी उससे पृथक् नहीं होती है ॥ ११ ॥

गुञ्जाबीजंत्वचोन्मुक्तंचूर्णंभाव्यंनृमूत्रकैः ॥
सप्तवारंततःकाष्ठंलिप्तमङ्गुलसम्भवम् ॥ १२ ॥

चौंटलीके बीजोंकी छाल अलगकर मनुष्य के मूत्रमें चूर्ण कर सातबार कांसीपर लेप करनेसे अंगुलवत् होजाय ॥ १२ ॥

तैलमादायतल्लिप्तंपूर्ववत्पादुकागतिः ॥
वर्तिस्सर्ज्जरसैःपूर्णातैललिप्ताजलेस्थिता ॥ १३ ॥

तेल लेकर पूर्ववत् दोनों खड़ाऊओंको लिप्त करै तौ पूर्ववत् विना खूंटीके खडाऊँपर जासकता है और रालकी बत्तीकरके तेलसे लिप्तकरके जलमें स्थित रखनेसे ॥ १३ ॥

ज्वलितादीपवर्तिस्तुज्वलत्येवनसंशयः ॥
कटुतुंब्युत्थतैलेनपारावतचटोद्भवम् ॥ १४ ॥

वह बत्ती बराबर जली रहैगी इसमें संदेह नहीं, कडवीतुम्बी के तेलसे कबूतर और चटककी बीट ॥ १४ ॥

मलंचशिखिमूलंचपेषितंगर्धभास्थिजम् ॥
ललाटेतिलकन्तेनकृत्वासंदृश्यतेपुनः ॥ १५ ॥

मूलशिखाकी जड गदर्भकी हड्डीके साथ पीसकर माथेपर तिलक लगानेसे ॥ १५ ॥

दशास्योनात्रसन्देहोयथालंकेश्वरोनृपः ॥
शिग्रुबीजोत्थितंतैलंपारावतपुरीषकम् ॥ १६ ॥

इसमें संदेह नहीं वह पुरुष दश शिरके रावणकी समान दीखता है । तथा सहँजनेके बीजोंका तेल और कबूतर की बीट ॥ १६ ॥

वराहस्यवसायुक्तंशिखिमूलसमंसमम् ॥
ललाटेतिलकंतेनयःकरोतिसवैजनः ॥ १७ ॥

बाराहकी चरबी शिखिमूल यह सब समान भाग लेकर जो मनुष्य माथेपर तिलक करै ॥ १७ ॥

दृश्यतेपंचवक्त्रोसौयथासाक्षान्महेश्वरः ॥
रात्रौकृष्णचतुर्दश्यांमयूरास्येविनिःक्षिपेत् ॥
भृंगीबीजंमदःकृष्णांकृष्णभूमौनिवापयेत् ॥
तज्जातभार्गीसंगृह्यतयाकुर्यात्तुरज्जुकम् ॥
तद्रज्जुबद्धःपुरुषोमयूरोदृश्यतेजनैः ॥ १८ ॥

वह पांच मुखवाला साक्षात् महेश्वरकी समान दीखता है, कृष्णचतुर्दशीकी रात्रिमें मोरके मुखमें अतिविषाके बीज सोम-

राजी डालकर कालीमिट्टी में बोवै जब वह उत्पन्न होजाय तब उसकी रस्सी बटकर जिस मनुष्यको उससे बांधे वह मनुष्योंको मोर दीखता है ॥ १८ ॥

तद्योगेकृष्णमार्जारवक्त्रेवैरंडबीजकम् ॥
तज्जातैरंडबीजानामेकवक्त्रेणधारयेत् ॥ १९ ॥

यह योग कृष्ण यूति सारिवा और तगर अंडके बीज उससे उत्पन्न हुए अंडके बीजोंको एकी करके मुखमें धारणकरै ॥ १९ ॥

तंप्रपश्यंतिमार्जारंमनुष्यानात्रसंशयः ॥
शृगालश्वानमेषांश्चयद्दिनेवापयेत्पृथक् ॥ २० ॥
मयूरास्येयथाभार्गीयातिसिद्धिश्वतादृशी ॥
रक्तगुंजाफलंवाप्यंस्त्रीकपालेऽथसेचयेत् ॥ २१ ॥

मनुष्य उसको बिलावकी सूरत दीखने लगता है । इसमें संदेह नहीं गीदड कुत्ता मेंढा इनके मुखमें पृथक् २ यही डालनेसे मोरके मुखमें जैसे भृंगी सिद्ध होती है वैसी सिद्धि होती है, लाल चौंटलीके फलको धोकर स्त्रीके कपालसे सीचनकरै ॥ २१ ॥

जातंफलंक्षिपेद्वक्त्रेस्त्रीरूपोदृश्यतेपुमान् ॥
नरादिसर्वजंतूनांग्राह्यंसद्योहतंशिरः ॥ २२ ॥

उससे जो फल उत्पन्न हो उसे मुखमें रखनेसे स्त्रीरूप दीखता है मनुष्यादि सम्पूर्ण जन्तुओंका तत्काल हतहुआ शिर ग्रहण कर ॥ २२ ॥

तच्चकृष्णचतुर्दश्यांसर्वबीजान्वितंवपेत् ॥
भृंगीधुस्तूरबीजानिगुंजानिवैकसंयुतम् ॥ २३ ॥

कृष्णपक्षकी चौदसको उसमें सबप्रकारके बीज बोवे भाँगरा धतूरा एरण्ड चौंटली यह सब एकत्रकर ॥ २३ ॥

निखनेत्कृष्णभूम्यान्तुबलिपूजासमन्वितम् ॥
सेवयेत्फलपर्यन्तंयावद्बीजानिचाहरेत् ॥ २४ ॥

कृष्णभूमिमें बलिपूजाके सहित उसको गाड़दे और फलपर्यन्त सीचता रहै उसीकी समान बीजौंको लेकर ॥ २४ ॥

तत्तद्बीजेकृतेवक्त्रेतत्तद्रूपंभवेद्ध्रुवम् ॥
इत्येवंकौतुकंलोकेनानारूपस्यदर्शनम् ॥ २५ ॥

जैसे जैसे बीज मुखमें रखते जाय वैसा २ रूप दीखता है, इस प्रकार लोकमें रखते अनेक रूपका दर्शन होताहै ॥ २५ ॥

मुक्तबीजोभवेत्स्वस्थोनात्रकार्य्याविचारणा ॥
हरितालंशिलाचूर्णमङ्कुलीतैलभावितम् ॥ २६ ॥

बीजोंको त्यागनेसे स्वस्थ होजाताहै इसमें संदेह नहीं, हरिताल मनशिलका चूर्ण मालकांगनीके तेलमें भावितकर ॥ २६ ॥

तल्लिप्तवस्त्रंशिरसिस्थितंपश्यतिवह्निवत् ॥
तथैवांकोलतैलेनस्फुरत्येवनसंशयः ॥ २७ ॥

उसे वस्त्रपर लगाय शिरपर धारणकर अग्निके समान दीखताहै इसीप्रकार अंकोलके तेलसे दीखता है इसमें सन्देह नहीं ॥२७॥

सिंदूरंगंधकंतैलंसमाम्पिष्ट्वामनश्शिलाम् ॥
तल्लिप्तवस्त्रधृक्चासौरात्रौसंदृश्यतेग्निवत् ॥ २८ ॥

सिंदूर और गंधकके तेलके साथ मनाशिलको पीसकर उसे कपड़ेमें लगाय धारणकर रातमें जाय तो अग्निकी समान दीखताहै ॥ २८ ॥

दूरेपिस्थितलोकैश्चरात्रौतुकौतुकंमहत् ॥
खद्योतमूलताचूर्णैललाटेतिलकेकृते ॥ २९ ॥

इस्से दूरसे स्थित हुए पुरुषोंको रात्रिमें बड़ा कौतुक दीखता है,

खद्योत और हरतालके चूर्णको माथेपर तिलक करनेसे ॥ २९ ॥

राञौसंदृश्यतेज्योतिस्तस्मिन्स्थानेतुकौतुकम् ॥
मुनिपुष्परसैःपुष्पैर्घृष्ट्वाश्वेतांजनंततः ॥ ३० ॥

रात्रिमें बडी ज्योति और कौतुक दीखता है अगस्त्यके फूलोंके रसमें श्वेतअंजन घिसकर ॥ ३० ॥

अंजिताक्षोनरःपश्येन्मध्याह्नेतारकामयम् ॥
वार्षवार्त्ताकुबीजंचनृकपालेमृदासह ॥ ३१ ॥

आंखोंमें लगानेसे मध्यान्हसमय मनुष्यको जलमें तारे दीखने लगतेहैं और बेंगनके बीज मनुष्यकी खोपडीमें डालकर बौनेसे ३१

तज्जातबीजमूलम्वामुखेप्रक्षिप्यमानवः ॥
शतयोजनपर्य्यन्तंपश्येत्सर्वंयथान्तिकम् ॥ ३२ ॥

उससे उत्पन्न बीज वा जड़को मुखमें रखनेसे सौ योजनकी वस्तु निकट से दीखने लगती है ॥ ३२ ॥

वारिमक्षिकयासार्द्धन्तज्जलंयस्यभक्षणे ॥
दीयतेनिःसरेत्तस्यह्यधोवायुस्तुकौतुकम् ॥ ३३ ॥

जलमक्षिकाके साथ जिसे भक्षण करनेको जल दिया जाय उसको अधोवायुमें यही मक्खी कौतुकयुक्त निकलती है ॥ ३३ ॥

"ॐनमोभगवतेरुद्रायउड्डामरेश्वरायबहुरूपाय
नानारूपधरायहसहसनृत्यनृत्यतुदतुदना
नाकौतुकेन्द्रजालदर्शकायठःठःस्वाहा" ॥
अनेनसर्वयोगानामभिमंत्र्यसिद्धिः ॥
अष्टोत्तरजपेनपुरश्चरणम् ॥

इति नानाकौतकम् ॥

---

१ सपश्येद्गरुडोयथा वा इति पाठः ।

'ॐनमो भगवते रुद्राय उड्डामरेश्वराय बहुरूपाय नानारूपाय सह सह नृत्यनृत्य तुद तुद नानाकौतुकेन्द्रजालदर्शकाय ठः ठः स्वाहा' इसमंत्रसे अभिमंत्रित करनेसे सब योगोंकी जो ऊपर लिखेहैं सिद्धि होतीहै एकसौ आठ वार जपकर पुरश्चरण करै ॥

इति नानाकौतुकसिद्धिः ।

## अथ खड्गस्तम्भनम् ॥

सिद्धिः[१]वस्तुसुमतिमोहरमाचान्द्रसुरजमोहोवरभाई
मोहौवरंआंगेकोपखांडाफूटैरक्षाकरदेवीकालिका
चंडीआईचांदसुरजतुजिमलेमुजिफूटैरामेरआज्ञा
सिद्धिउकवारत्रयाभिमंत्रितं ॥
धूलिनाप्रोक्षितेगात्रेकृपाणधारारेखाभवतिनान्यतः॥

इतिखड्गस्तम्भनम् ॥

इतिश्रीनित्यनाथविरचितेकामरत्नेनानाकौतुकंनामैकादशोपदेशः ११

अथवा वस्तु सुमति मोहोरमाचान्द्र सुरुज मोहो वरभाइ मोहवर आगे कोप खांडा फूंटै रक्षाकर देवी कालिका चण्डी आइ चांद सूरज तुजि भले मुजि फूटैरामेर आज्ञा सिद्धि तीनबार, इस मंत्रसे अभिमंत्रित कर धूरिसे शरीरको आच्छा दित करे तो कृपाणधारा रेखा होजाती है इसमें अन्यथा नहीं है अर्थात् खड्गबंधन हो जाता है ॥

इति श्रीनित्यनाथविरचितेकामरत्नेभाषाटीकायां नानाकौतुकंनामैकादशोपदेशः ॥ ११ ॥

## अथकाम्यासिद्धिः ॥

पुष्यार्कैतुसमागृह्यमूलंश्वेतार्कसंभवम् ॥

---

१सिद्धिर्वसुमतिमोहोरमावादसुरजमोहोरमाइमोरअंगकोपखाडाफूटइहरक्षा करैदेवीकालिकाचण्डीआइ०चंदसुरजइमइलेमुइफूटौरामिरआज्ञासिद्धहलव ॥

अंगुष्ठप्रतिमांकुर्य्यात्प्रतिमांतुप्रपूजयेत् ॥ १ ॥
गणनाथस्वरूपांचभक्त्यारक्ताश्वमारजैः ॥
कुसुमैश्चापिगंधाद्यैर्हविष्याशीजितेन्द्रियः ॥ २ ॥
पूजयेन्नाममन्त्रैश्चतद्बीजानिनमोंतकैः ॥
यान्यान्प्रार्थयतेकामान्मासैकेनतुलभ्यते॥ ३ ॥

अथ काम्य सिद्धि । पुष्यनक्षत्रमें श्वेत आककी जड ग्रहणकर उसकी एक अंगुष्ठकी समान प्रतिमाको बनाकर पूजन करै और गणनाथको भक्त्यादि उपचार तथा लाल कनेरके कुसुम गंधादिसे पूजनकर हविष्य अन्न खाय जितेन्द्री रहे नाममात्रसे पूजा करै और बीजादिके अन्तमें 'नमः' लगावै इस प्रकार पूजन करे तो जिस जिस वस्तुकी इच्छा करैगा वह एक मासमें पूर्ण होगी ॥ ३ ॥

प्रत्येकंकाम्यसिध्यर्थंमासमेकंप्रपूजयेत् ॥ ४ ॥

प्रत्येक कामनाकी सिद्धिके निमित्त एक महीनेभरतक पूजा करै ॥ ४ ॥

ॐ गणेशबीजमाह ॥ पंचान्तकंॐअन्तरिक्षायस्वाहा ।
अनेनपूजयेत्।पंचांतकंगणेशशशिधरंबीजंगणपतोर्बिंदुः ॥
ॐह्रींपूर्वंदयांॐह्रींफट्स्वाहा ॥
अनेनमंत्रेणरक्ताश्वमारपुष्पाणिघृतक्षौद्रयुतानिजुहुयात् ॥
वांछितन्ददाति ॥
ॐह्रींश्रींमानसेसिद्धिकरिह्रींनमः ॥
अनेनमंत्रेणरक्तकुसुममेकंजापित्वानद्यांक्षिपेत् ॥
एवंलक्षंजपेत्ततोभगवतीवरदाअष्टगुणानामेकंगुणंददाति ॥
इतिकाम्यसिद्धिः ॥

गणेशबीज कहते हैं 'ॐपंचान्तकं ॐअन्तरिक्षाय स्वाहा'–इससे पूजन करे पांच अक्षर नीचे लिखे यह गणपतिबीज है 'ॐ ह्रीं पूर्वदयां ॐह्रीं फट् स्वाहा' इस मंत्रसे लाल कनेरका फूल घृत और शहतके सहित हवन करनेसे मनोवांछित फलकी प्राप्ति होती है 'ॐ ह्रीं श्रीं मानसे सिद्धिकरिह्रीं नमः' इस मंत्रसे एक लालफूल पढकर नदीमें डालदे इस प्रकार लक्ष जपकरनेसे वरदायक होता है अष्टगुणोंमें एक गुण देता है ॥

इति काम्यसिद्धिः ॥

---

## अथवाक्सिद्धिः ॥

कृत्तिकायांस्नुहीवृक्षवंदाकंधारयेत्करे ॥
वाक्यसिद्धिर्भवेत्तस्यमहाश्चर्यमिदंस्मृतम् ॥ ४ ॥

अथ वाक्सिद्धि । कृत्तिकानक्षत्रमें सेहुड़ नामक वृक्षका वन्दा हाथमें धारण करनेसे वाक्यसिद्धि होती है यह महाश्चर्य है ॥ ४ ॥

मंत्रेणग्राहयेत्स्वातीनक्षत्रेबदरीभवम् ॥
वन्दाकंतत्करेधृत्वायद्यस्तुप्रार्थ्यतेनरैः ॥ ५ ॥

स्वातीनक्षत्रमें बेरका वन्दा ग्रहणकर उसे हाथमें धारणकर मनुष्योंसे जो जो प्रार्थना करै ॥ ५ ॥

तत्क्षणात्प्राप्यतेसर्वंमंत्रमत्रैवकथ्यते ॥ ६ ॥
ॐतंअन्तरिक्षायस्वाहा ॥
अनेनग्राहयेत् ॥ इतिवाक्सिद्धिः ॥

वह वह सब प्राप्त करसकता है मंत्र यह है 'ओं तं अन्तरिक्षाय स्वाहा' इससे ग्रहण करै ॥ ६ ॥

इति वाक्सिद्धिः ॥

---

## अथ गुप्तधनगुप्तवेशचौरादिप्रकाशनम् ।

वन्दाशाखोटचूतस्थागोक्षुरंलवणंपदम् ॥ ७ ॥
अजाक्षीरेणसंपेष्यललाटेतिलकेकृते ॥
प्रकाशंजायतेसर्वंतच्छृणुष्वसमाहितः ॥ ८ ॥

शाखोटका वन्दा आमका वन्दा गोखरू लवण चौथाईभाग बकरीकेदूधमें पीसकर माथेपर तिलक करै तो सब गुप्त प्रकाश होजाता है ॥ ८ ॥

धनानियत्रवासंतियेवाचौरादिकास्तथा ॥
गुप्तवेशामहात्मानोगंधर्वायाक्षिणीश्वराः ॥ ९ ॥

जहां धनादिक हों अथवा चोरादिक हों अथवा गुप्तवेशगन्धर्व यक्षिणी मनुष्य यक्षादि यावन्मात्र ॥ ९ ॥

चतुर्द्दातुश्चवृक्षाद्यामर्त्यलोकेस्थिताध्रुवम् ॥
आश्लेषायांशनेर्वारेसायंदाडिमबीजकम् ॥ १० ॥

जो मनुष्यलोकमें स्थित हैं वे सब प्रगट होजाते हैं आश्लेषानक्षत्रमें शनिवारके दिन सायंकालमें दाडिमके बीजका रसग्रहणकर १०

रसंसंगृह्यतुवरींकृष्णाष्टम्यान्तुभूमिजे ॥
पद्ममूलंमंगलेहन्यंजनंकारयेत्सुधीः ॥ ११ ॥
प्रकाशंपूर्ववत्सर्वंजायतेनात्रसंशयः ॥ १२ ॥

इतिगुप्तधनगुप्तवेशचौरादिप्रकाशनम् ॥

अष्टमी मंगलवारको कमलकी जड और शतावरीका रस ग्रहणकर ॥ इसे शुद्धकर अंजन बनाय लगावै तो पूर्ववत् सब प्रकाश होजाता है इसमें सन्देह नहीं ॥ ११ ॥ १२ ॥

इति गुप्तधनगुप्तवेशचौरादिप्रकाशनम् ॥

---

## अथधनुर्विद्या ॥

इन्द्रेणयाविद्यापुराअर्ज्जुनंप्रतिकथिता ॥
सासप्तविंशत्यक्षराकालायुतरक्ताघोरा ॥
ॐकारशतगुणआधारेएकादशशतसहस्रइन्द्रआज्ञा ॥
एतन्मंत्रेणशरंधृत्वानवधापठित्वाआकर्णपूरितेधनु
षिशरंमेलयेत् ॥ सहस्रधाभवति ॥ कलौदशधा ॥
महादेवेनइन्द्रम्प्रतियाकथितासा सप्तदशाक्षरा ॥
चान्द्रधनुर्गुणरेखाकांडब्रह्मज्ञान ॥
ॐॐॐएतन्मंत्रंपठित्वापंचवारंतदाक्षिपेत्पूर्ववंद्भवति ॥
सर्पैःकवलितम्भेकमर्धमात्रंसमुद्धरेत् ॥
छित्वासर्पस्यमुंडंचआतपेशोषयेत्पृथक् ॥ १३ ॥
पिष्ट्वापृथग्वटीकार्यालक्ष्यलाभप्रदास्मृता ॥
लक्ष्येतुमेकतिलकंशराग्रेसर्पमुंडजम् ॥
दत्वातिलकमाकर्ण्यगुणंधनुषिवेधयेत् ॥
लक्ष्यस्यातिलकंबाणोभिन्दत्येवनसंशयः ॥ १४ ॥
ॐरक्तेधनुरक्तेकाण्डरक्तेहलिजामामारोअमुकारअ
मुकंआंगआमुकटाईमारोंत्रिदशदेवगणरुद्रसाक्षीआ
मुकारमारोंदेवेनराखीअर्जुनकृष्णभवानीरआज्ञा ॥
एतन्मंत्रंपठित्वायस्ययदंगेमारयेत्तदंगंविध्यति ॥
किन्तुप्रथमपरीक्षायांशनिमङ्गलाह
निमृतंब्राह्मणस्यवंशमानीयधनुः ॥
कांडंसज्जीकृत्वातत्प्रमाणंगुणंन्दत्वातत्रतत्समयेवा

पुष्पहारमेकंदत्वामुष्टिस्थानेहंसजीवभेकंभंजयित्वा एकनारिकेलजलेनप्रक्षाल्यकाण्डत्रयेणलक्ष्यंविध्वा साधयेत्यदाद्भुतंधनुःकाण्डेनलक्ष्यंसत्रोरंगसमीपेवे धयेत्तदावृथानस्यात् ॥

इतिधनुर्विद्या ॥

अथ धनुर्विद्या।इन्द्रने जो विद्या पहले अर्जुन से कहीहै वह सत्ताईस अक्षर की है। 'ओंकालायुत रक्ताधरे ओंकारशतगुणआधारे एकादश-शत सहस्र इंन्द्रआज्ञा'।इसमत्र से धनुषपर बाणधारण कर कर्णपर्यन्त नौवार पढकर खैंचे तौ सहस्रप्रकार बाण होता है॰ कलियुगमें दश प्रकारसे होता है । और महादेवजीने जो इन्द्रसे कही है वह सत्त-रह अक्षर की विद्याहै (चान्द्रधनुर्गुणरेखाकाण्ड ब्रह्मज्ञान ओंओंओं ) यह मंत्र पांचवार पढ़कर बाण चढ़ावै तौ पूर्ववंत् होता है सर्पसे अर्धखाये मेडकको और सर्पके शिरको काटकर लावै उसे गरमीमें सुखाय पीस गुटिका करै यह लक्षलाभ की देने-वाली है लक्ष्यमें मेडकका तिलक बाणके अग्रभागमें सर्पके मुण्डका कतिलक करै फिर डोराधनुषपर चढाय निशाना लगावै अवश्य लक्ष्य के तिलकको बाण वेधैगा इसमें सन्देह नहीं ॐरक्ते धनुरक्ते-काण्डरक्ते हालिजामा मारो अमुकार अमुकं आसुकटाई मारों त्रिदशदेव गणरुद्र साक्षीअमुकार मारों देवेनराखी अर्जुन कृष्ण भवानीर आज्ञा ॥

यह मंत्र पढकर जिसके शरीरमें जहां मारै वही अंग विद्ध होगा किन्तु पहलीपरीक्षामें शनि मंगलके दिनमें मृतकहुए ब्राह्मणकी अर्थीके बासका धनुष बनाय उसको उसके प्रमाणके डोरेमें चढा कर एक पुष्पहार प्रदान कर मुष्टिस्थानमें हंसशिशु भंजन कर

नारियलके जलसे धोय तीन काण्डसे लक्ष्यवेधकर साधे तो वृथा नहीं होगी ॥ १४ ॥

इति धनुर्विद्या ॥

---

# अथधनधान्याक्षयकरणम् ॥

ऋक्षेचपूर्वफाल्गुन्यांदाडिमीवृक्षसंभवम् ॥
वृक्षादनीघनेदेयमक्षयंभवतिध्रुवम् ॥
वन्दाकन्तुमघाऋक्षेबहुवारकवृक्षकम् ॥
धान्यागारेप्रदातव्यमक्षयंभवतिध्रुवम् ॥ १५ ॥

धनधान्य अक्षयकरण। पूर्वाफाल्गुनीनिक्षत्रमें दाडिमके वृक्षका तथा विदारीकन्दका वन्दा रखनेसे धन अक्षय होता है मघानक्षत्रमें बहुवारके वृक्षका वन्दा लाकर धान्यमें रखनेसे अवश्य धान्य अक्षय होता है ॥ १५ ॥

शेफालिकायावन्दाकंहस्तर्क्षेचसमुद्धरेत् ॥
धान्यमध्येतुसंस्थाप्यंतद्धान्यमक्षयंभवेत् ॥ १६ ॥
भरण्यांकुशवन्दाकंगृहीत्वास्थापयेद्बुधः ॥
सम्पूर्णधनधान्यान्तःस्थंकरोत्यक्षयंध्रुवम् ॥ १७ ॥

हस्तनक्षत्रमें निर्गुण्डीवृक्षका वन्दा ग्रहणकर धान्यमें रक्खे तो धान्य अक्षय होता है भरणीनक्षत्रमें कुशका वन्दा लेकर स्थापन करनेसे सम्पूर्ण धनधान्य अक्षय होता है ॥ १७ ॥

उदुंबरस्यवन्दाकंरोहिण्यांग्राहयेद्बुधः ॥
स्थापयेत्संचितार्थन्तुसदाभवतिचाक्षयम् ॥
मंत्रेणमंत्रितंकृत्वामंत्रोप्यत्रैवकथ्यते ॥
ॐनमोधनदायस्वाहा इतिधनधान्याक्षयकरणम्॥१८॥

रोहिणीनक्षत्रमें गूलरका वन्दा ग्रहणकर स्थापनकरै तो अवश्य अक्षय होता है अभिमंत्रित करनेका मंत्र इस स्थानपर कहते हैं ( ॐनमो धनदाय स्वाहा) ॥ १८ ॥

इतिधनधान्याक्षयकरणम् ॥

---

## अथश्रुतिधरविद्यादिकरणम् ॥

पथ्यापाठाकणाशुंठीसैंधवंमरिचंवचा ॥
शिग्रुप्रतिपलंचूर्णंद्वात्रिंशतिपलंघृतम् ॥ १९ ॥
घृताच्चतुर्गुणंक्षीरंदत्वासर्वंविपाचयेत् ॥
घृतशेषंसमुत्तार्य्यलिहेद्वाग्बुद्धिदायकम् ॥ २० ॥

श्रुतिधरविद्यादिकरणम् । हरड़ पाठा पीपल सोंठ कालीमिर्च सेंधा वच सहेंजना यह सब एक एक पल ले घीबत्तीसपल ले घीसे चौगुना दूध लेकर यह सब एक पात्रमें पकावे जब रस जल जाय घृतमात्र शेष रहजाय तब उतारले नित्य इसके पानसे वाणी बुद्धि स्मृति बढती है ॥२०॥

## अथ ब्राह्मीघृतम् ॥

द्वेहरिद्रेवचाकुष्टंपिप्पलीविश्वभेषजम् ॥
अजाजीचाजमोदाचयष्टीमधुकसंयुतम् ॥ २१ ॥

ब्रह्मीघृत । दोनों हलदी वच कूठ पीपल सोंठ जीरा अजमोद मुलैठी ॥ २१ ॥

एतानिसमभागानिशुष्कचूर्णानिकारयेत् ॥
तच्चूर्णंसर्पिषालेह्यंकर्षंकंवाक्यशुद्धिकृत् ॥ २२ ॥

यह सब बराबर भागले सुखाकर चूर्ण करै यह चूर्ण घृतके साथ एक कर्ष लेनेसे वाक्यसिद्धि होतीहै ॥ २२ ॥

भक्षयेन्मासमेकन्तुबृहस्पतिसमोभवेत् ॥
ब्राह्मीमुण्डीवचाशुण्ठीपिप्पलीसमचूर्णकम्॥ २३ ॥

एक महीने इसके सेवन से बृहस्पतिकी समान होताहै ब्राह्मी मुण्डी वच सोंठ पीपल इनका समान चूर्णकर ॥ २३॥

मधुनाभक्षयेत्कर्षनष्टवाग्जायतेध्रुवम् ॥
वचास्थिकरवीगुन्द्रामुशलीमधुकंबला ॥
अपामार्गस्यपंचांगंक्षौद्रेणपूर्ववत्फलम् ॥ २४ ॥
अपामार्गवचाशुंठीविडङ्गंशंखपुष्पिका ॥
शतावरीगुडूचीचसमंचूर्णंहरीतकी ॥ २५ ॥

शहतके साथ एककर्ष सेवन करनेसे मनुष्य स्पष्ट बोलनेवाला हो जाता है इसमें सन्देह नहीं अथवा वचकी मींग हिंगु पत्री भद्र-मोथा मूषली मुलैठी खरैंटी चिरचिटेका पंचांग वच सोंठ वायविडंग शंखपुष्पी शतावरी गुडूची हरड़ इनका समान चूर्ण कर ॥ २५ ॥

घृतेनभक्षयेत्कर्षंनित्यंग्रन्थसहस्रधृक् ॥
अश्वगंधाजमोदाचपाठाकुष्टंकटुत्रयम् ॥ २६ ॥

घृतके साथ एक कर्ष प्रतिदिन खाय तो सहस्र ग्रन्थका धारण करनेवाला होता है असगंध अजमोद पाठा कुटकी ( कूठ ) त्रिकुटा२६

शतपुष्पीविश्वबीजंसैंधवंचसमंसमम् ॥
एतदर्द्धंवचाचैवचूर्णितंमधुसर्पिषा ॥ २७ ॥

सोंफ सोंठ सेंधा यह समान भाग लेकर चूर्ण कर इससे आधी वचले शहत और घीमें मिलाय ॥ २७ ॥

भक्षयेत्कर्षमात्रन्तुजीर्णान्तेक्षीरभोजनम् ॥
सहस्रग्रंथधारीस्यान्मूकोपिवाक्पतिर्भवेत् ॥ २८ ॥

एक कर्ष खाय ऊपरसे दूधका भोजन करै तो यह सहस्रग्रन्थका धारण करने वाला वाक्पति होता है ॥ २८ ॥

लिहेज्ज्योतिष्मतीतैलंबलयावचयासह ॥
स्तोकंस्तोकंक्रमेणैवयावन्निष्कचतुष्टयम् ॥ २९ ॥

मालकांगनीके तेलको खरैंटी और वचके सहित चाटे थोड़ा २ क्रमसे चारनिष्कतक बढावे ॥ २९ ॥

निर्वातेमधुवासीस्याद्ब्रह्मचारीकविर्भवेत् ॥
सूर्यस्यग्रहणेवेन्दोःसमन्त्रामाहरेद्वचाम् ॥ ३० ॥

निर्वातस्थानमें रहे शहत चाटे वह ब्रह्मचारी कवि होता है सूर्य वा चन्द्रग्रहणमें मंत्रके सहित वचका वन्दा लावे ॥ ३० ॥

चूर्णितांसघृतांभुक्त्वासप्ताहेवाक्पतिर्भवेत् ॥
इत्येवमादियोगानांमंत्रराजःशिवोदितः ॥ ३१ ॥

इसे चूर्णकर घीके साथ खानेसे एक सप्ताहमें वाक्पति होता है इन योगोंका मंत्रराज शिवने कहा है ॥ ३१ ॥

जप्त्वायुतञ्चसिद्धिःस्यात्पश्चात्तैरेवभक्षयेत् ॥
ॐहूंहयशीर्षवागीश्वरायनमः॥सहस्रजपः ॥
धात्रीफलरसैर्भाव्यंवचाचूर्णंदिनावधिः ॥
घृतेनलेहयेन्निष्कंवाक्शुद्धिस्मृतिबुद्धिकृत् ॥ ३२ ॥

१००००, मंत्र जपनेसे सिद्धि होती है पीछे उक्त पदार्थ भोजन करै 'ॐहूं हयशीर्ष वागीश्वरायनमः' । यह सहस्र जप है । वचका चूर्ण आमलेके रसमें एकदिन भावितकर एकनिष्क घृतके साथ चाटनेसे वाणीकी सिद्धि और बुद्धि होती है ॥ ३२ ॥

वचाचूर्णंक्षिपेत्क्षीरेपुनर्मंत्रेणमंत्रितम् ॥
भोज्यंक्षीरेणशाल्यन्नंसप्ताहेवाक्पतिर्भवेत् ॥ ३३ ॥

मंत्रको पढकर वचका चूर्ण मंत्र के सहित दूधके साथ लेनेसे वाक्पति होता है ॥ ३३ ॥

सप्तमेअष्टमेचैवसाक्षाच्छ्रुतिधरोभवेत् ॥
वचाचूर्णंपिबेत्क्षीरैर्घृतैःक्षौद्रैश्चयत्पुनः ॥
सप्ताहक्रमयोगेनलेह्यंस्यात्पूर्ववत्फलम् ॥ ३४ ॥

इसे सात दिन वा आठ दिन सेवन करनेसे वेदका धारणकरने वाला होता है अथवा वचका चूर्ण शहत और घृतके साथ चाटनेसे सप्ताहमें बुद्धि तीव्र होजाती है ॥ ३४ ॥

पुष्यार्कयोगेसंगृह्यश्वेतार्कस्यतुमूलकम् ॥
छायाशुष्कंचतच्चूर्णम्मंत्रेणैवाभिमंत्रितम् ॥ ३५ ॥

पुष्यनक्षत्रमें श्वेत आककी जड ग्रहणकर उसे छायामें सुखाय चूर्ण करै मंत्र से अभिमंत्रितकर ॥ ३५ ॥

कर्षमर्द्धपलंवापिप्रातरुत्थायसंपिबेत् ॥
तक्रेणसर्पिषावापिजीर्णान्तेक्षीरभोजनम् ॥ ३६ ॥

एक कर्ष वा आधे पल इसको प्रातःकाल उठकर खाय पचने के समय गौका मट्ठा घी अथवा क्षीर सेवन करै तौ ॥ ३६ ॥

एवंसप्ताहमात्रेणकविर्भवतिबालकः ॥
ॐमहेश्वरायनमः ॥ अनेनमंत्रेणाभिमन्त्र्यपिबेत् ३७॥
इतिश्रुतिधरविद्यादिकरणम् ॥

सात दिन में बालक भी कवि होजाता है 'ॐ महेश्वरायनमः' यह मंत्र है ॥ ३७ ॥

इति श्रुतिधरविद्यादिकरणम् ॥

---

## अथकिन्नरीकरणम् ॥

हरिद्राचवचाकुष्टंपिप्पलीचयवानिका ॥

मरिचंसैन्धवंशुंठीमेषांचूर्णंतुकारयेत् ॥ ३८ ॥

हलदी वच कूट पीपल अजवायन कालीमिर्च सैंधा सोंठ इन का चूर्ण कर ॥ ३८ ॥

मधुनासहितंचूर्णंपेषयित्वाशिलातले ॥
दिनैश्चसप्तभिश्चैवभक्षितव्यंनिरन्तरम् ॥ ३९ ॥

इसे शहत से पीस खाय तो सात दिन निरन्तर खानेसे ॥३९॥

जायतेसुस्वरःपुंसांकिन्नरैःसहगीयते ॥
विभीतकंकणाशुंठीसैन्धवंत्वक्समंसमम् ॥ ४० ॥

किन्नरीकी समान कंठ होताहै बहेड़ा पीपल सोंठ सैंधा तज यह समान भागले ॥ ४० ॥

गोमूत्रेणपिबेत्कर्षंकिन्नरैःसहगीयते ॥
जातीपत्रकणालाजामातुलुंगफलंमधु ॥
पलंलेह्यंभवेन्नादःकिन्नराधिकएवच ॥ ४१ ॥

एक कर्ष गोमूत्रके साथ पान करनेसे किन्नरोंके साथ गान कर सकता है उनकी समान स्वर होजाताहै ॥ ४१ ॥

देवदारुकणाव्योषंशताह्वापत्रकंनिशा ॥
वचासैंधवशिग्रूत्थंमूलंपेष्यंसमंसमम् ॥ ४२ ॥

देवदारु सोंठ मिर्च पीपल जीरा सोंफ पत्रज हलदी वच सेंधा सहेंजनेकी मूली यह सब वस्तु समान लेकर ॥ ४२ ॥

कर्षैकंमधुसर्पिर्भ्यांमासमात्रंसदालिहेत् ॥
कंठशुद्धिर्भवेत्तस्याकिन्नरैःसहगीयते ॥ ४३ ॥

एक कर्ष मधु और घृतके साथ एक महीने चाटे तो कंठकी शुद्धि होती है किन्नरोंके साथ गा सकता है ॥ ४३ ॥

शुंठीचशर्कराचैवक्षौद्रेणसहसंयुता ॥
कोकिलस्वरएवस्याद्गुटिकाभुक्तिमात्रतः ॥ ४४ ॥

सोंठ और मिश्री शहतके साथ मिलाय इसकी गोली बना सेवन करै तो स्वर अच्छा हो ॥ ४४ ॥

आर्द्रकंभृंगकोरंडवासाब्राह्मीवचातथा ॥
वचाचूर्णसमांशेनपलैकंवारिणापिबेत् ॥ ४५ ॥

अदरख भांगरा दालचीनी पीपल अडूसा ब्राह्मी वचका चूर्ण यह समान भाग ले जलके साथ एक कर्षपीने ॥ ४५ ॥

मासिमासिचतुर्दश्यांकृष्णपक्षेद्विसप्तकम् ॥
गंधर्वसदृशंगानंकोकिलानांस्वरोयथा ॥ ४६ ॥

महीने २ कृष्णपक्षकी चतुर्दशीतक चौदह दिन खाय तो गन्धर्व और कोकिलाके स्वरकी समान गान कर सकता है ॥ ४६ ॥

निर्गुण्डीमूलचूर्णन्तुतिलतैलेनयोलिहेत् ॥
कंठशुद्धिर्भवेत्तस्यकिन्नरैःसहगीयते ॥ ४७ ॥

इतिकिन्नरीकरणम् ॥

निर्गुण्डीकी जड़का चूर्ण तिलके तेलके साथ चाटनेसे कंठकी शुद्धि होती है किन्नरोंके साथ गासकता है ॥ ४७ ॥

इति किन्नरीकरणम् ॥

---

## अथचक्षुष्यम् ॥

वर्षाकालेकाकमाचींसमूलांतैलपाचिता ॥
खादेत्समासतश्चक्षुर्गृध्रदृष्टिसमंभवेत् ॥ ४८ ॥

वर्षाकालमें समूल काकमाची तेलमें पकावै इसे एक महीने खानेसे गृध्रकी समान दृष्टि होती है ॥ ४८ ॥

श्वेतम्पुनर्नवामूलंघृतघृष्टंसदाञ्जयेत् ॥
जलस्रावंनिहंत्याशुतन्मूलंतुनिशायुतम् ॥ ४९ ॥

श्वेतपुनर्नवाकी जड़ घीमें पीसकर सदा आंजनेसे नेत्रोंसे जलका निकलना बंद होजाता है अथवा हलदीको नेत्रोंमें आंजे ॥ ४९ ॥

अंजनेचक्षुरोगाश्चनभवंतिकदाचन ॥
द्विनिशासैन्धवंत्र्यूषंबीजंकरंजकंसमम् ॥ ५० ॥

तौ किसी प्रकारसे नेत्ररोग नहीं होताहै दोनों हलदी सेंधा त्रिकुटा करंजके बीज यह समान भाग लेकर ॥ ५० ॥

भृंगीद्रवैर्युतम्वापितिमिरंपटलंहरेत् ॥
शम्बूकंवावराटम्वादग्धंशुष्कंविचूर्णितम् ॥ ५१ ॥

अतीसके रसमें बत्ती बनाय नेत्रोंमें आंजनेसे तिमिर दूर होताहै ॥ ५१ ॥

अञ्जयेन्नवनीतेनहन्तिपुष्पंचिरन्तनम् ॥
अजामूत्रेणभूधात्रीमूलंपिष्ट्वाचवर्तिका ॥ ५२ ॥

घोंघा या कौडी इन्हे जलाय चूर्ण कर मक्खनके साथ नेत्रोंमें आंजै तौ बहुत दिनोंका फूला दूर होता है छागके मूत्रमें भुइ-आमलेकी जड़ पीस उसकी बत्ती को ॥ ५२ ॥

नवनीतसमायुक्तंहन्तिपुष्पंचिरन्तनम् ॥
अञ्जनान्नाशयेत्पुष्पंक्षौद्रैर्वास्वर्णमाक्षिकम् ॥ ५३ ॥

मक्खनके साथ लगानेसे पुराना फूला नष्ट होजाता है अथवा शहत के साथ सोनामक्खी मिलाय आंजनेसे फूल नष्ट होजाताहै ॥ ५३ ॥

मरीचेमर्दनेरक्तैर्वर्तीरात्र्यन्धताञ्जयेत् ॥
जयन्तीवाभयावाथघृष्ट्वास्तन्यैर्निशान्धहृत् ॥५४॥

कालीमिर्चको मर्दनकर बत्ती बनाय लगावै तौ नेत्रोंका रतौंधा दूर होता है अथवा जयन्ती वा हरड़को पीस लगावै तौ रतौंधा दूर होजाताहै ॥ ५४ ॥

शोणितंचर्मकोपंचमांसवृद्धिंचनाशयेत् ॥
अजस्यकृष्णमांसान्तःपिप्पलीमरिचंक्षिपेत् ॥५५॥

रुधिरविकार चर्मकोप और मांसवृद्धि भी इससे दूर होती है काले बकरेके मांसमें पीपल और कालीमिर्च डालै ॥ ५५ ॥

कारयित्वाघृतेपच्याद्घटिकान्तेसमुद्धरेत् ॥
मध्वाज्यस्तन्यसंपिष्टंरात्र्यन्धहरमञ्जनम् ॥ ५६ ॥

फिर एक घडी घीसे पकाय उसकी वटिका बनावै उसमें शहत घी स्त्रीके दूधसे पीस लगावै तौ रतौंधा दूर होजाता है ॥ ५६ ॥

अजापित्तगतंव्योषंधूमस्थानेविशोषयेत् ॥
चिरबिल्वरसैर्घृष्टंरात्र्यन्धहरमञ्जनम् ॥ ५७ ॥

बकरीका पित्त सोंठ मिरच पीपलके साथ धूमस्थानमें सुखावै करंजके रसमें इसे घिसकर लगावै तौ रतौंधा दूर होजाताहै ॥ ५७ ॥

घृतेनपुष्पंमधुनाश्रुपातंतैलेनकंडूंतिमिरंजलेन ॥
रात्र्यन्धकंकांजिकयानिहन्तिपुनर्नवानेत्रपुनर्नवङ्करी ५८

घृतसे फूला शहतसे अश्रुपात तेलसे खुजली जलसे तिमिर कांजीसे रतौंधा दूर होताहै श्वेतपुनर्नवाकी जड नेत्रोंको नवीन कर देती है ॥ ५८ ॥

अत्रश्वेतपुनर्नवाग्राह्या ॥ हरीतकीवचाकुष्टंपिप्पलींमरिचानिवै ॥ बिभीतकस्यमज्जाचशंखनाभिर्मनःशिला ५९

इसमें श्वेतपुनर्नवा लेनी । वच कूट पीपल कालीमिर्च बहेडे की मींगी शंखनाभि मनःशिल ॥ ५९ ॥

सर्वमेतत्समंकृत्वाछागीक्षीरेणपेषयेत् ॥
नाशयेत्तिमिरंकंडूंपटलान्यर्बुदानिच ॥ ६० ॥

यह सब बराबर ले बकरीके दूधसे पीस लगावै तो तिमिर अष्टीला अर्बुदरोग नाश होते हैं ॥ ६० ॥

अधिकानिचमांसानियश्चरात्रौनपश्यति ॥
अपिद्विवार्षिकंपुष्पंमासेकेनैवनाशयेत् ॥ ६१ ॥

जो नेत्रोंमें अधिक मांस बढजाता है, तथा जो रात्रिमें नहीं देखता है वह रोग तथा दोवर्ष का फूला एक मासमें अवश्य नष्ट होजाता है ॥ ६१ ॥

वर्तिश्चन्द्रोदयानामनृणांदृष्टिप्रसादिनी ॥ ६२ ॥

दृष्टिको बढाने वाली चन्द्रोदयनामबत्ती मनुष्यको प्रयुक्त करनी चाहिये ॥ ६२ ॥

छायाशुष्कावटीकार्य्यानामचन्द्रोदयावटी ॥ यस्त्रै
फलंचूर्णमपथ्यवर्ज्यंसायंसमश्नातिहविर्मधुभ्याम् ॥
समुच्यतेनेत्रगतैर्विकारैर्भृत्यैर्यथाक्षीणधनोमनुष्यः ६३

इति चक्षुष्यम् ॥

यह वटी छायामें सुखाकर मनुष्यको प्रयोग करनी चाहिये यह दृष्टि निर्मल करती है जो मनुष्य त्रिफलेके चूर्णको संध्या समय हवि और शहत के साथ खाता है वह नेत्रविकारोंसे ऐसे छूट जाता है जैसे धनहीन पुरुषको नौकर छोंड जाते हैं ॥ ६३ ॥

इति चक्षुरोगनिवारणम् ॥

---

## अथ कर्णस्यबाधिरत्वनाशनम् ॥

शिखरिक्षारजलेनतत्कृतकल्केनसाधितंतिलजम् ॥

अपहरतिकर्णनादंबाधिर्यञ्चापिपूरणात् ॥ ६४ ॥

चिरचिरेके खारयुक्त जलसे वा इसीकें साथ तिलके तेलका कल्क कर कानोंमें डाले तौ बधिरता नाश होती है ॥ ६४ ॥

दशमूलीकषायेणतैलप्रस्थेविपाचयेत् ॥
एतत्कल्कंप्रदायैवबाधिर्य्येपरमौषधम् ॥ ६५ ॥

दशमूलके काढेको एकसेर तेलमें पकावे जब तेलमात्र रह जाय तौ उतारले कर्णबधिरता नाश करनेको यह परम औषधी है॥६५॥

नीलीब्रघ्नरसस्तैलंसिद्धकांजिकसंयुतम् ॥
कदुष्णपूरणात्कर्णोनिश्शेषकृमिनाशनः ॥ ६६ ॥

नीलिकाके रसको तेल और कांजीके सहित कुछ गरम गरम कानोंमें पूर्ण करनेसे सब कृमि नाश होजाते हैं ॥ ६६ ॥

दन्तेनचर्वयेन्मूलंनन्द्यावर्त्तपलाशकम् ॥
तन्नालीपूरितेकर्णेध्रुवंगोमक्षिकाञ्जयेत् ॥ ६७ ॥

धव सोनामक्खी और पलाशकी जड़ दांतोंसे चबानेसे वा कण में उसका लेप करनेसे गोमक्षिका दूर होती है ॥ ६७ ॥

ताम्बूलभक्षणंकृत्वातत्रसन्दापयेद्बुधः ॥
तत्रस्थितास्तुकृमयोनाशमायान्तिनिश्चितम्॥६८॥

फिर ताम्बूल भक्षण कर सेक करै तौ कानके कृमि अवश्य नाश होजाते हैं ॥ ६८ ॥

मूषालीबाकुचीचूर्णखादेद्बाधिर्य्यशान्तये ॥
मनःशिलापामार्गोंथमूलंचूर्णमधुप्लुतम् ॥ ६९ ॥

मूषली बकुचीका चूर्ण खानेसे बधिरता नाश होजाती है मन-शिल अपामार्गके मूलका चूर्ण शहतमें मिलाकर ॥ ६९ ॥

भक्षयेत्कर्षमात्रन्तुबधिरत्वप्रशान्तये ॥

लशुनामलकंतालंपिष्ट्वातैलेचतुर्गुणे ॥ ७० ॥

एक कर्षमात्र खानेसे वह बहरापन शान्त होजाताहै लहसन आमला हरताल पीसकर इससे चौगुना तेल ले ॥ ७० ॥

तैलाच्चतुर्गुणंक्षीरंपाच्यंतैलावशेषितम् ॥
तत्तैलंनिक्षिपेत्कर्णेबाधिर्य्यंञ्चविनाशयेत् ॥ ७१ ॥

इसको पकाले जब रस जल जाय तेलमात्र रह जाय वह तेल कानमें डालनेसे बहरापन शान्त होजाताहै ॥ ७१ ॥

## अथ कर्णपालीवर्द्धनम् ॥

सिद्धार्थबृहतीचैवह्यपामार्गसमंसमम् ॥
छागीक्षीरैःप्रलेपोयंकर्णपालींविवर्द्धयेत् ॥ ७२ ॥

सरसौं कटेरी चिरचिटा इनको बकरी के दूधसे लेप करै तौ कर्णपाली बढती है ॥ ७२ ॥

मुषलीकन्दचूर्णंचमहिषीक्षीरसंयुतम् ॥
लोडयेत्स्निग्धभाण्डेतुधान्यराशौनिवेशयेत्॥७३॥

मूषलीकन्दका चूर्ण कर भैंसके मक्खनके साथ मिलाय बरतनमें मिलाय धान्यराशी में धरै ॥ ७३ ॥

सप्ताहादुत्थितंलेप्यंकर्णपालीविवर्द्धते ॥
गुंजामूलकृतंचूर्णमहिषीक्षीरसंयुतम् ॥ ७४ ॥

फिर सात दिनमें निकाल लेप करनेसे कर्णपाली बढती है चौंटलीकी जड़का चूर्ण कर उसमें दूध मिलाय ॥ ७४ ॥

शृतंदधिततःकुर्य्यान्नवनीतंतदुद्भवम् ॥
कर्णयोर्लेपयेन्नित्यंवर्द्धयेन्नात्रसंशयः ॥ ७५ ॥

दहीजमाय उसका मक्खन निकालकर कानोंपर लेप करै तो कर्णपाली बढती है ॥ ७५ ॥

अश्वगंधावचाकुष्टंगजपिप्पलिकासमम् ॥
महिषीनवनीतेनलेपात्कर्णोविवर्द्धते ॥ ७६ ॥

असगंध वच कूट गजपीपल यह भैंसके मक्खन के साथ मिलाय लेप करनेसे कान बढ़ता है ॥ ७६ ॥

वराहोत्थेनतैलेनलेपःकर्णविवर्धनः ॥
चर्मचटकस्यरक्तेनलेपात्कर्णौविवर्द्धते ॥ ७७ ॥

अथवा वराहके तेलका कानोंपर लेप करनेसे कान बढ़ताहै अथवा चर्मचटकका रक्तलेप करनेसे कर्णवृद्धि होती है ॥ ७७ ॥

इति कर्णस्यबधिरत्वनाशनं कर्णपालीवर्धनंच ॥

---

## अथदंतदृढीकरणम् ॥

यमचिंचाजयापुंखामूलंवाहयमारजम् ॥
चलदंतादृढायंतेप्रत्यहंदन्तधावनात् ॥ ७८ ॥

इमली जयन्ती शरफोंका कनेरकी जड़ दांतोंमें लगानेसे कैसे भी दांत हिलते हों दृढ होजाते हैं ॥ ७८ ॥

ताम्रपात्रेक्षणंपाच्यमभयाचूर्णकंमधु ॥
पिष्ट्वाचगुटिकाकार्यादंतैर्धार्याकृमीन्हरेत् ॥ ७९ ॥

हरका चूर्ण और शहत यह ताम्बेके पात्रमें क्षणमात्र पाचितकर गुटिका कर दांतोंमें धारण करै तो दांतोंके कृमि नाश होते हैं७९॥

दंतैर्धार्य्यस्नुहीमूलंकृमिनाशंकरोत्यलम् ॥
कासीसंघृतसंपक्वंधार्य्यंदन्तेव्यथापहम् ॥ ८० ॥

थूहरकी जड़ दातोंमें धारण करनेसे कृमि नाश होजाते हैं कसी-

सको घृतमें पकाकर दांतोंमें धारण करनेसे दांतोंकी व्यथा दूर होती है ॥ ८० ॥

विशालयोःपलंचूर्णंतप्तलोहेपरिक्षिपेत् ॥
तद्धूमस्पृष्टदंतानांकीटपातोभवत्यलम् ॥ ८१ ॥

इन्द्रायण महेंद्रवारुणीका चूर्ण एक पल तप्त लोहेपर डाल दे उसका धुआं छूतेही दांतोंका कीडा मरजाता है ॥ ८१ ॥

जातिकोरकपत्रंचचर्वयेत्प्रातरुत्थितः ॥
स्थिराःस्युश्चलितादंतास्तत्काष्ठैर्दंतधावनात् ॥ ८२ ॥

प्रातःकाल उठकर जायफल कंकोलके पत्ते चबावै तो हिलते हुए दांत निश्चल होजाते हैं ॥ ८२ ॥

गुंजामूलन्तुकर्णाभ्याम्बद्धन्दन्तकृमिप्रणुत् ॥
त्रिसूतंरौप्यमेकन्तुजम्बीररसमर्दितम् ॥ ८३ ॥

चौंटलीकी जड कानोंमें बांधनेसे दांतका कीडा नष्ट होजाताहै एक रुपयेभर पारा जम्बीरीके रसमें मर्दित करै ॥ ८३ ॥

जम्बीरफलमध्यस्थंवस्त्रेबध्वात्र्यहंपचेत् ॥
क्षीरमध्येसमुद्धृत्यगुटिकांतांततःपुनः ॥ ८४ ॥

फिर उसे जम्बीरी नीबूमें रख वस्त्रमें बांध तीन दिनतक दूधमें पकावै फिर उसे निकाल गुटिका करै ॥ ८४ ॥

भावितंभानुदुग्धेनतालकंसूक्ष्मपेषितम् ॥
तन्मध्येगुटिकांक्षित्वावस्त्रेबध्वादिनत्रयम् ॥
मधुभांडगतंपश्चादुद्धृताचास्यधारिता ॥ ८५ ॥

इसे कालीमिर्च आकके दूध और हरताल से सूक्ष्म पीसकर गुटिका बनाय वस्त्र में तीन दिन बांध रक्खे फिर शहतके साथ मांड़ और दूध में रक्खे इसको दांतोंमें घिसे तो ॥ ८५ ॥

घर्षणाच्चलितान्दंतांस्तत्क्षणात्कुरुतेदृढान् ॥
तालकंभानुदुग्धेनदिनमेकंविमर्दयेत् ॥ ८६ ॥

हिलते हुए दांत दृढ़ होजात हैं हरताल को आकके दूध में एक दिन खरल करे ॥ ८६ ॥

तद्गर्भेरसहेमोत्थांपिण्डकांतारसंयुताम् ॥
जम्बीरफलमध्यस्थांदोलायंत्रेत्र्यहम्पचेत् ॥ ८७ ॥

फिर उसको पारेके साथ पिंडीकर के एक स्थान में रक्खे और जंबीरीके फलके बीचमें रखकर तीन दिन दोलायन्त्रमें पचावै ॥ ८७ ॥

तैलक्षौद्रयुतेभांडेसमुद्धृत्यविधारयेत् ॥
दन्तरोगान्हरेत्सर्वान्घर्षणाच्चलिताद्दृढाः ॥ ८८ ॥

फिर तेल और शहत मिलाय इसको बरतनमें रख छोडे यह मलतेही सम्पूर्ण दांतोंके रोगोंको दूर करता है ॥ ८८ ॥

चलदन्तास्थिरकरंकार्य्यंबकुलचर्वणम् ॥
बकुलस्यतुबीजन्तुपिष्ट्वाकोष्णेनवारिणा ॥
मुखेचधारयेद्धीमान्दन्तदार्ढ्यकरम्परम् ॥ ८९ ॥

दांतोंको स्थिर और बलयुक्त करता है बकुलके बीज कुछ गरम पानीके साथ पीसकर बुद्धिमान् मुखमें धारण करै तो दांत दृढ होजाते हैं ॥ ८९ ॥

बकुलस्यत्वचाक्काथमुष्णंवक्त्रेणधारयेत् ॥
दृढाःस्युश्चलितादन्ताःसप्ताहान्नात्रसंशयः ॥ ९० ॥

बकुलकी छालका क्काथ गरम २ मुखमें धारण करनेसे सात-दिनमें हिलते हुए दांत दृढ होजाते हैं इसमें सन्देह नहीं ॥ ९० ॥

इतिदन्तदृढीकरणम् ॥

---

# अथ आहारकरणम् ॥

अर्ध्रकेनापिवृक्षस्यपीठंकृत्वाशनैःस्थितः ॥
योसौभुंक्तेघृतैस्साद्धंम्भोजनंभीमसेनवत् ॥ ९१ ॥

बंधूके वृक्षका पीढाकर शनैः २ उसपर बैठ घृतके सहित भोजन करै तो भीमसेनकी समान भोजन होगा ॥ ९१ ॥

संध्यायामाम्रवृक्षस्यकर्त्तव्यमभिमंत्रितम् ॥
प्रातःपुष्पाणिसंगृह्यमालांशिरसिधारयेत् ॥ ९२ ॥

संध्याके समय आमके वृक्षको अभिमंत्रितकर प्रातःकाल उसके मौरकी माला शिरपर धारण करै ॥ ९२ ॥

कौपीनंसंपरित्यज्यभुंक्तेसौभीमसेनवत् ॥
उद्भ्रान्तपत्रमादायकपिलाश्वानदन्तकम् ॥
कट्यामेवद्वयंबध्वाभुंक्तेसौभीमसेनवत् ॥ ९३ ॥

और कौपीन त्याग भोजन करने बैठे तो भीमसेन की समान भोजन करै मूषकपर्णीके पत्तोंको लाकर तेल पिप्पलीके साथ इन दोनोंको कमरमें बांधे तौ भीमसेनकी समान भोजन करै ॥ ९३ ॥

गृहीत्वामंत्रितान्मंत्रीबिभीततरुपल्लवान् ॥
आक्रम्यदक्षिणांजंघांविंशत्याहारभुग्भवेत् ॥ ९४ ॥

मंत्रका जान्नेवाला मंत्रपूर्वक बहेडेके पत्ते दहिनी जांघसे आक्रमण कर ग्रहण करै अर्थात् जांघके तले रखकर भोजन करनेसे बीसगुना होता है ॥ ९४ ॥

ॐनमस्सर्वभूताधिपतयेग्रस २ शोषय२भैरवी
आज्ञापयतिस्वाहा ॥ उक्तयोगानामयंमंत्रः ॥

---

१ मुष्क इति वा पाठः।

अधरंकृकलासस्यशिखास्थानेविबंधयेत् ॥
वायुपुत्रइवाश्चर्य्यमसौभुंक्तेनसंशयः ॥ ९५ ॥

मंत्र 'ॐनमः सर्वभूताधिपतये ग्रस २ शोषय २ भैरवी आज्ञापयति स्वाहा ' उपरोक्त योगका यह मंत्र है ॥ घिरघटका अधर शिखास्थानमें स्थित करनेसे भीमसेनकी समान भोजन होगा इसमें सन्देह नहीं ॥ ९५ ॥

ॐनाभिवेगेनउर्वशीस्वाहा ॥

'ॐ नाभीवेगेन उर्वशी स्वाहा' ॥

इति आहारकरणम् ॥

---

## अथानाहारकरणम् ॥

अंत्राणिकृकलासस्यमज्जाकरंजबीजकम् ॥
पिष्ट्वातद्गुटिकांकुर्य्यात्रिलोहेनतुवेष्टिताम् ॥ ९६ ॥

घिरघटकी अन्त्र और करंजके बीजोंकी मींग पीसकर उसकी गुटिका बना चांदी सोने अथवा तांबेमें मढकर ॥ ९६ ॥

तांवक्रेधारयेद्योसौक्षुत्पिपासानबाधते ॥ ९७ ॥

मुखमें धारण करनेसे भूख और प्यास नहीं लगती है ॥ ९७ ॥

ॐसांसांशरीरममृतमाकर्षयस्वाहा ॥
पद्मबीजंमहाशालीछागीदुग्धेनपाचयेत् ॥
साज्यंचपायसंभुक्त्वाद्वादशाहंक्षुधापहम् ॥ ९८ ॥

'ॐ सांसांशरीर ममृतमाकर्षय स्वाहा' कमलगट्टेकी गिरी महाशालिधान्य छागीके दूधसे पकावे घृतसहित वह खीर खाय तो बारह दिनतक भूख नहीं लगती है ॥ ९८ ॥

उदुम्बरस्यजंबीरशालिशिम्बीशिरीषजम् ॥
बीजंसंचूर्ण्यचाज्येनभुक्त्वापक्षंक्षुधापहम् ॥ ९९ ॥

गूलर जंम्बीरी शालिधान्य शिम्बी शिरसके बीज इनका चूर्ण कर घीके साथ खानेसे पन्द्रह दिन भूख नहीं लगती है ॥ ९९ ॥

उदुम्बरफलंपक्कमिंगुदीतैलभावितम् ॥
भुक्त्वामासंक्षुधंहंतिपिपासांचनसंयशः ॥ १०० ॥

गूलरका पक्का फल इंगुदीके तेलमें भावित कर खानेसे एक महीनेतक भूख और प्यास नहीं लगती है इसमें सन्देह नहीं १००

अपामार्गस्यबीजानित्वग्र्वर्जानिप्रपाचयेत् ॥
पायसंछागलीक्षीरैर्भुक्तंमासक्षुधापहम् ॥ १०१ ॥
ॐनमोभगवतेरुद्रायअमृतार्कमध्येसं
स्थितायममशरीरेअमृतंकुरु२स्वाहा ॥१०२॥
उक्तयोगानामयंमंत्रः ॥

अपामार्गके बीज पकाय बकरीके दूधमें इसकी खीर खानेसे एक महीनेतक भूख नहीं लगती ॥ 'ओंनमो भगवते रुद्राय मृतार्क मध्ये संस्थिताय ममशरीरे अमृतं कुरु २ स्वाहा' ॥ उपरोक्त योगका यह मंत्र है ॥ १०२ ॥

इत्यनाहारकरणम् ॥

---

## अथपादुकासाधनम् ॥

अश्वनालेङ्गुदीतैलैःपेषयेच्छ्वेतसर्षपम् ॥
तल्लिप्तपादहस्तस्तुयोजनानांशतंव्रजेत् ॥ १०३ ॥

घोडेकी नार अंकुलीका तेल श्वेत सरसों यह सब वस्तु पीसे उसको हाथ पैरोंमें सम्यक् लपेटकर सौ योजन जा सकता है१०३

अंकोलस्यतुमूलंतुतिलतैलेनपाचयेत् ॥
पादसंजानुपर्य्यन्तंलिप्त्वादूराध्वगोभवेत् ॥ १०४॥

अंकोलकी जड़ तिलके तेलमें पकावे इसको जंघापर्यन्त लेप करके मनुष्य दूरतक जासकता है ॥ १०४ ॥

ॐह्रींनमः ॥

ॐनमश्चंडिकायैगगनंगगनंचालय २
वेशय हिलि २ वेगवाहिनीह्रींह्रींस्वाहा ॥
उक्तयोगद्वयस्यायमेवमंत्रः ॥
काकस्यहृदयंनेत्रेजिह्वांचैवमनःशिलाम् ॥
गैरिकंसिंधुजंचैवअजामारीचमालती ॥ १०५ ॥

'ॐह्रीं नमश्चंडिकायै गगनं २ चालय २ वेशय हिलि २ वेग वाहिनी ह्रीं ह्रींस्वाहा 'उक्त योगोंका यह मंत्र है काकका हृदय दोनों नेत्र जिह्वा मनशिल गेरू सेंधानोन शूकशिम्बी मालती ॥ १०५ ॥

समंरुद्रजटांचैवविदार्यासहपेषयेत् ॥
तल्लिप्तपादस्सहसासहस्रंयोजनम्व्रजेत् ॥ १०६ ॥

सप्तरुद्रजटा विदारीकंद यह सब पीसके उसको हाथ पैरमें लपेटकर सहस्र योजनको जासकते हैं ॥ १०६ ॥

वलीपलितनिर्मुक्तोयावदाह्वतशंकरम् ॥ १०७ ॥
ॐनमोभगवतेरुद्रायनमोहरितगदाधरायत्रासय २॥
क्षोभय २ चालने २ स्वाहा ॥
काकजिह्वाब्रह्मचारीगुडलोहेनवेष्टयेत् ॥
मुखेप्रक्षिप्यगच्छन्तियोजनंशतमेवच ॥ १०८ ॥

वलीपलितसे निर्मुक्त हो कर शंकरको आह्वान करै ॥ ॐ नमो भगवते रुद्राय नमो हरितगदाधराय त्रासय २ क्षोभय २ चालने२ स्वाहा' ॥ कागकी जिह्वा भारंगी गुड़ यह लोहसे वेष्टित कर मुखमें डालकर सौ योजन जासकतेहैं ॥ १०८ ॥

आगच्छन्तितदातूर्णंतेनराःनात्रसंशयः ॥ १०९ ॥
और बहुत शीघ्र आसकते हैं इसमें संदेह नहीं ॥ १०९ ॥
इतिपादुकासाधनम् ॥

---

## अथअनावृष्टिहरणम् ॥

हूह्रींहू ( अथवा ) हुंश्रींहुंइमंमंत्रंजलमध्येप्रविश्ययदिजपेत्॥
तदाअनावृष्टिंहरति ॥ महावृष्टिर्भवति ॥
इत्यनावृष्टिकरणम् ॥

इति श्रीनित्यनाथविरचितेकामरत्नेकामसिद्ध्यादि
अनावृष्टिनिवारणं नामद्वादशोपदेशः ॥ १२ ॥

'हुं श्रीं हुं' इस मंत्र को जलके मध्यमें खड़ा होकर जपै तो अनावृष्टि जाती रहती है महावृष्टि होती है ॥

इति श्रीनित्यनाथविरचिते कामरत्ने भाषाटीकायांकामसिद्ध्यादि
अनावृष्टिनिवारणं नाम द्वादशोपदेशः ॥ १२ ॥

---

## अथनिधिदर्शकमंजनम् ॥

अञ्जनानांतुसर्वेषांमंत्रंसाध्यमघोरकम् ॥
विनामंत्रेणविद्याश्चनाशयन्तिपदेपदे ॥ १ ॥

सब अंजनोंमें अघोरमंत्र साधन करना उचित है विना मंत्रके पद पद में विद्या नष्ट होती है ॥ १ ॥

यक्षिणींमूर्त्तिमाश्रित्यजपेदष्टसहस्रकम् ॥
ततःसर्वविधानानिसुसाध्यानिचप्रारभेत् ॥ २ ॥

यक्षिणीमूर्तिके आश्रित होकर आठ सहस्र जप करे तो सब निधि उसको सुखपूर्वक विदित होजांयगी ॥ २ ॥

ॐबहुरूपंविश्वरूपंविद्याधरमहेश्वरम् ॥
जपाम्यहंमहादेवंसर्वसिद्धिप्रदायकम् ॥ ३ ॥

'ओंबहुरूप विश्वरूप विद्याधर महेश्वर' सब सिद्धिके देनेवाले को मैं जपकरताहूं ॥ ३ ॥

ॐनमोरुद्रायरुद्ररूपायनमोबहुरूपायनमोविश्वरूपायनमोविश्वात्मनेनमः तत्पुरुषयक्षायनमोयक्षरूपायनमएकस्मैनमएकायनमएकरौरवायनमएकयक्षायनमएकेक्षणायनमोयक्षायनमोवरदायनमःतुदतुद स्वाहा ॥ सोपवासोजितेन्द्रियोभूत्वामहेशपूजां कृत्वाइमंमंत्रंजपेत्सिद्धिर्भवति॥ कज्जलानांपातनार्थं ग्राह्योयत्नेनपावकः ॥ दीक्षितस्यगृहेश्रेष्ठंचितायान्तु विशेषतः ॥ ४ ॥

'ओंनमो रुद्राय रुद्ररूपाय नमो बहुरूपाय नमो विश्वरूपाय नमो विश्वात्मने नमः तत्पुरुषयक्षायनमो यक्षरूपायनमः एकस्मै नम एकाय नम एक रौरवाय नम एकयक्षाय नम एकेक्षणाय नमो यक्षाय नमो वरदाय नमः तुद तुद स्वाहा' ॥ उपवास रख जितेन्द्रिय होकर शिवकी पूजाकर इसमंत्रको जपनेसे सिद्धि होती है ॥ काजरके पारनेको यत्नपूर्वक अग्नि ग्रहण करै साधक घरमें वा विशेष चितामें ॥ ४ ॥

रजकस्यगृहाद्वापितस्कैरस्यग्रहाच्चयः ॥
ॐज्वलितविद्युद्धूमायस्वाहा ॥ अयमग्निग्रहणमंत्रः
ॐनमोभगवतेवासुदेवायबंधबंधश्रीपतयेस्वाहा ॥

---

१ एकरोमायनमोवापाठः ।

अनेनमंत्रेणवह्निमभिमंत्रयेत् ॥
ॐनमोभगवतेसिद्धसाधकायज्वल २ पच२ पातय२ बन्धय २ संहर २ दर्शय २ निधिंनमः ॥ अनेनदीपंज्वालयेत् ॥
ॐमंत्रःसर्वसिद्धेभ्योनमोविश्वेभ्यस्वाहा ॥
अनेनकज्जलंग्राह्यं ॥
ॐकालिकालिमहाकालिरक्षेदंजनंनमोविश्वेभ्यःस्वाहा ॥
अनेनमंत्रेणयत्किंचिदंजनद्रव्यमभिमंत्रयेत् ॥
ॐसर्वसर्वहितेक्लींसर्वसर्वहितेसर्वौषधिप्रयाहिते ॥
निरतेनमोनमःस्वाहा ॥
अनेनमंत्रेणअंजनयोग्यांमूलिकामभिमंत्रयेत् ॥
आदौकेवलहेमशलाकयानेत्रमंजयित्वाततस्त
यैवशलाकयाअंजनद्रव्यमभिमंत्रयेत् ॥
अंजयित्वांजनंपश्चात्सप्तधारस्यपत्रकम् ॥
बंधयेत्प्रतिनेत्रन्तुअच्छिद्रंतदधोमुखम् ॥ ८ ॥

अथवा धोबीकेघरसे वा चोरके यहांसे लावे मंत्र यह है ' ओं ज्वलितविद्युद्धामाय स्वाहा अथ अग्निग्रहणका मंत्र ओं नमो भगवते वासुदेवाय धरधर बंध बंध श्रीपतये स्वाहा इसमंत्रसे अग्निको अभिमंत्रित करे ॐनमो भगवते सिद्धसाधकाय ज्वल २ पत २ पातय२ बंध २ संहर २दर्शयदर्शय निधिर्मम इसमंत्रसे दीपकज्लावे ओं ऐं मंत्रःसिद्धेभ्यो नमोविश्वेभ्यःस्वाहा इसमंत्रसे कज्जल ग्रहणकरै ओं कालिकालिमहाकालि रक्षेदंजनं नमो विश्वेभ्यः स्वाहा इस मंत्रसे अंजन द्रव्यको अभिमंत्रित

---

१ तक्षकस्यगृहाच्चय इतिवा पाठः ।

करै ओं सर्वे सर्वहिते क्लीं सर्वे सर्वहिते सर्वऔषधी प्रियाहिते निरते नमो नमः स्वाहा' इसमंत्रसे अंजनयोग्यवर्तिको अभिमंत्रित करै प्रथम सुवर्णशलाकासे नेत्रोंको आंजकर उस शलाकासे अंजन द्रव्यको अभिमंत्रितकरै ॥ इस प्रकार अंजनको आंजकर सात धारक पत्रको बांघ प्रतिनेत्रको अच्छिद्र और अधोमुख बंधित करै ॥ ५ ॥

तस्योपरिसितंवस्त्रंपट्टजञ्चापिवंधयेत् ॥
नांज्यादधिकहीनांगंश्वदंष्ट्रंचाग्निदग्धकम् ॥ ६ ॥

उसके ऊपर सम्यक् प्रकारसे रक्खेहुए श्वेतवस्त्रको वेष्टन कर वा रेशमनिको बांधै और उस समय अधिक और हीन अंगवालों को न आंजे तथा श्वदंष्ट्रआग्निदग्ध को न आंजे ॥ ६ ॥

सम्पूर्णांगंशुचिस्नात्वाद्विदिनंनक्तभोजनम् ॥
क्षीरशाल्यन्नभोक्तारंत्रिदिनांतेततोंजयेत् ॥ ७ ॥

सम्पूर्ण प्रकार से पवित्र हो स्नान करके दोदिनपर्यन्त रात्रिमें भोजन करै दूध शाली धान खाय इस प्रकार तीन दिनके उपरान्त फिर आंजै ॥ ७ ॥

अंजितस्यशिखाबंधंकर्त्तव्यंमंत्रउच्यते ॥ ८ ॥
ॐनमोभगवतेरुद्रायतुलतुलमहेश्वरमाहेश्वल
नुज्वलुविज्वल २ मिज्वल २ हर २ यक्षरक्षपू
जितेयक्षकुमारीसुलोचनेस्वाहा ॥ ॐनमोभग
वतेरुद्राय ॐनन्न २ महेन्नविहेन्नविहेन्नमिहेन्न २
हरहररक्ष २ पूजितेयक्षकुमारिसुलोचनेस्वाहा ॥
यक्षाणांमूर्त्तिमाश्रित्यउदयास्तंमनुंजपेत् ॥
पूर्वमेवसमाख्यातांशिखाबंधांशिवोदितम् ॥ ९ ॥

इदंसर्वांजनेज्ञातव्यम् ॥

आंजकर शिखाबंधन करे उसका मंत्र कहते हैं 'ओंनमो भगवते रुद्राय तुल तुल माहेश्वल नुज्वलु विज्वल २ मिज्वल २ हर २ यक्ष रक्ष पूजिते यक्षकुमारी सुलोचने स्वाहा' ॥ यक्षोंकी मूर्तिके आश्रित होकर उदय और अस्तमें इसका जप करै शिखा बंधन शिवने पूर्व कहादिया है यह सब अंजनमें जान्नाचाहिये ॥ ९ ॥

शरत्कालेतुसंग्राह्याभूलतारक्तवर्णका ॥
सिंदूरपूरितांकृत्वावर्त्तितूलेनवेष्टयेत् ॥ १० ॥

शरत्कालमें पृथ्वीसे इन्द्रगोंप ( वीर बहूटी ) ग्रहण करनी चाहिये उसमें सिंदूर पूरित करके आककी रुई की बत्ती करे ॥१०॥

अतिकृष्णतिलतैलंग्राहयेद्रक्षयेत्सुधीः ॥
तैलवर्त्योःप्रयोगेणकज्जलंचोत्तरायणे ॥ ११ ॥

और बहुत कालेतिलोंका तेल लेकर उसको रक्षित करै उसी प्रयोगसे उत्तरायणमें कज्जल ॥ ११ ॥

ग्राहयित्वाञ्जनंचक्षुर्निधिंपश्यतिसाधकः ॥
प्रमाणंचविजानातिगृह्णातिचयथेप्सितम् ॥ १२ ॥

ग्रहण करनेसे आंजै तो निधिका दर्शन होताहै और उसका प्रमाण जानकर यथेष्ट ग्रहण करसकता है ॥ १२ ॥

अतिकृष्णस्यकाकस्यजिह्वामांसंसमाहरेत् ॥
वेष्टयेद्रवितूलेनवर्जितेनैवकारयेत् ॥ १३ ॥

बहुत काले कौएकी जिह्वाका मांस लावैं उसको आककीरुईसे लपेटकर बत्तीकी समान कर ॥ १३

अजाघृतेनदीपन्तुप्रज्वाल्यादायकज्जलम् ॥
अंजिताक्षोनरस्तेननिधिंपश्यतिपूर्ववत् ॥ १४ ॥

बकरीके घीमें उसका दीपक जलाय कज्जल ग्रहण करे इससे मनुष्य अज्ञात निधिको पूर्ववत् देखताहै ॥ १४ ॥

सप्तधापद्मसूत्राणिभावयेदिक्षुजैरसैः ॥
उद्धृत्यज्वालयेद्दीपमंकुलीतैलसंयुतम् ॥ १५ ॥

ईखके रसमें पद्मसूत्रको सातवार भावना दे फिर उसे लेकर अंगुलीके तेलसे दीपक जलावे ॥ १५ ॥

ग्राह्यंकृष्णत्रयोदश्यांकज्जलंनिधिदर्शकम् ॥
सर्वांजनमिदंसिद्धंशंभुनापरिकीर्त्तितम् ॥ १६ ॥

कृष्णपक्षकी त्रयोदशीको कज्जल ग्रहण करनेसे निधिका दर्शन होता है यह सर्व सिद्ध अंजन शिवजीने कहा है ॥ १६ ॥

दीपकज्जलयोःपात्रंकर्त्तव्यंनरमुण्डजम् ॥
सर्वेषांकज्जलानांतुसत्यंस्याच्छिवभाषितम् ॥१७॥

परन्तु सब प्रकारके इन दीपकसे काजर पारनेका पात्र मनुष्यकी खोपड़ी ग्रहण करनी चाहिये यह शिवजीने कहाहै ॥ १७ ॥

रक्तेनकृकलासस्यभावयित्वामनःशिलाम् ॥
तेनैवांजितनेत्रस्तुनिधिंपश्यातिपूर्ववत् ॥ १८ ॥

गिरघटके रक्तसे मनशिलाको भावना देकर इससे नेत्ररंजित करके पूर्ववत् निधिको देखता है ॥ १८ ॥

गृहीत्वाचानुराधायाम्वंदांशाखोटवृक्षजाम् ॥
गोरोचनसमंपिष्ट्वात्वंजनंनिधिदर्शकम् ॥ १९ ॥

शाखोटवृक्षका वन्दा अनुराधानक्षत्रमें ग्रहण करके गोरोचन के साथ पीसकर आंजनेसे निधिका दर्शन होताहै ॥ १९ ॥

एतत्सर्वांजनख्यातंप्रसिद्धंशिवभाषितम् ॥
अगस्त्यवृक्षजांकुर्य्यात्पादुकांनिधिदर्शकाम् ॥ २०

पादुकांजनयोगेनसिद्धियोगाभवंतिवै ॥ २१ ॥

यह सब अंजन प्रसिद्ध शिवजीके कहे हैं अगस्त्यके पेड़की पादुका बनानेसे निधिका दर्शन होताहै पादुका अंजनके योगसे सिद्धयोग होताहै ॥ २१ ॥

ॐनमोभगवतेरुद्रायउड्डामरेश्वरायशिलि २ धूमरे नागवेतालिनीस्वाहा॥ अनेनपादुकामभिमंत्रयेत्॥
तुलसीमूलिकांपुष्येशनिवारेसमुद्धरेत् ॥
निष्पिष्यकांजिकेनाथमधुनापुनरंजयेत् ॥ २२ ॥

'ओंनमो भगवते रुद्राय उड्डामरेश्वराय शिलि २ धूमरे नागवेतालिनी स्वाहा' इससे पादुकाको अभिमंत्रित करै॥ तुलसीमूलिका पुष्यनक्षत्र शनिवारके दिन ग्रहण करे उसे कांजीमें डाल शहतमें मिलाय आंजे ॥ २२ ॥

पादजातंकुमारम्वाकन्यकांवातदानिधिम् ॥
दृश्यतेनात्रसन्देहःपातालेलम्बकावपि ॥ २३ ॥

श्रेष्ठ वर्णमें हुए कुमार वा कन्याको निधिका दर्शन हो सकताहै इसमें सन्देह नहीं पातालपर्यन्त भी निधि हो तो उसका दर्शन हो सकता है ॥ २३ ॥

ॐनमोभगवतेरुद्रायकज्जललेपांजनंदर्शय २ स्वाहाठःठः ॥
अनेनमंत्रेणकज्जललेपांजनमभिमंत्रयेत् ॥
खन्यमानेचसर्पाश्चनिस्सरान्तिपदेपदे ॥ २४ ॥

'ओंनमो भगवते रुद्राय कज्जललेपांजनं दर्शय २ स्वाहा ठः ठः'इस मंत्रसे कज्जललेपांजनको अभिमंत्रित करै फिर खनन करने से पद पदमें बड़े २ सर्प निकलते हैं ॥ २४ ॥

औषधेनविनातेभ्योभयंस्यान्मंत्रिणामपि ॥
तस्मादौषधयोगेनपादलेपनचाञ्जयेत् ॥ २५ ॥

औषधीसे विना मंत्रवालोंको भी इनसे भय होसकता है इस कारण औषधिके योगसे चरणमें लेप करके इनको जयन करै॥२५॥

अर्कस्यकरवीरस्यपनसस्यतुमूलिकाम् ॥
पिष्ट्वापादप्रलेपाच्चदूरेगच्छंतिपन्नगाः ॥ २६ ॥
इतिनिधिदर्शकांजनम् ॥

आक करवीर और पनसकी जड पीसकर चरणोंमें लेप करनेसे सर्प दूर भागजाते हैं ॥ २६ ॥

इति निधिदर्शकमंजनम् ॥

---

## अथ अदृश्यकरणम् ॥

चतुर्लक्षमिमंमंत्रंश्मशानेप्रजपेच्छुचिः ॥
नग्नवृत्तिस्ततस्तुष्टापटंयच्छतियक्षिणी ॥ २७ ॥

पवित्र होकर आगे कहाहुआ मंत्र श्मशानमें नग्न होकर जपै तब यक्षिणी इसको एक वस्त्र देती है ॥ २७ ॥

तेनावृतोनरोदृश्योविचरेद्वसुधातले ॥
निधिम्पश्यतिगृह्णातिनविघ्नैःपरिभूयते ॥ २८ ॥

उस्से यह मनुष्य किसीको न दीखता हुआ पृथ्वीतलमें विचरता है और निधि देखकर ग्रहण करसकता है कहीं बिघ्नोंसे इसका तिरस्कार नहीं होता है ॥ २८ ॥

ॐह्रांह्रींस्फेंश्मशानवासिनीस्वाहा ॥
निशाचरींनिशिध्यात्वाजप्त्वावामेनपाणिना ॥
अदृश्यकारिणींविद्यांलक्षजाप्येप्रयच्छति ॥ २९ ॥
ॐनमोनिशाचरमहामहेश्वरपर्यंटतः
सर्वलोकलोचनानिबंधय २ देव्याज्ञापयतिस्वाहा ।

रात्रौकृष्णचतुर्दश्यांश्मशानान्तःशिवालये ॥
बलिनाचोपहारेणकुर्यादर्चनमुत्तमम् ॥ ३० ॥

'ओं ह्रीं ह्रीं स्फें श्मशानवासिनी स्वाहा' रात्रिमें ध्यान कर वाम हाथसे जप करताहुआ एक लक्ष जप करके इस अदृष्टकरनीविद्या को प्राप्त होता है 'ओंनमो निशाचर महामहेश्वर मम पर्यटतः सर्वलोकलोचनानि बंध बंध देव्याज्ञापयाति स्वाहा' कृष्णचतुर्दशीकी रात्रिमें श्मशान शिवालय आदिमें बली उपहार आदिसे उत्तम अर्चन करै ॥ ३० ॥

ततोदीपाङ्गुलीतैलैर्वर्तिस्यादर्कतन्तुभिः ॥
प्रज्वाल्यनृकपालेतुतत्पात्रेघृतकज्जलम् ॥ ३१ ॥

और फिर अंगुलीके तेलसे युक्त आकके तन्तुओंकी बत्ती बनावै मनुष्यकी खोपडीमें बालकर खोपडीपरही काजल पारै ॥ ३१ ॥

अंजयेन्नेत्रयुगलंदेवैरपिनदृश्यते ॥
अर्कशाल्मलिकार्पासपट्टपद्मजतन्तुभिः ॥ ३२ ॥

उसको दोनों आंखोंमें लगाने से देवताओंकोभी नहीं दीखता है आक शालिधान्य कपासका वस्त्र कमलके तन्तु ॥ ३२ ॥

पंचाभिर्वर्तिकाभिश्चनृकपालेषुपंचसु ॥
नवनीतेनदीपास्युःकज्जलंनृकपालतः ॥ ३३ ॥

पांच बत्ती करके यह अलग २ पांच मनुष्योंकी खोपडीमें पारै मक्खनको तेलके स्थानमें बारकर वा नरतेलसे मनुष्यकी खोपड़ीमें काजर पारै ॥ ३३ ॥

ग्राहयेत्पंचभिर्यत्नात्पूर्ववच्चशिवालये ॥
पंचस्थानीयजातंतुएकीकुर्य्यात्तुतंम्पुनः ॥ ३४ ॥

---

१ नरतैलेन इति वा पाठः ( नरका तेल )

इन पांचोंको पूर्ववत् शिवालयमें ग्रहण करै पांचोंस्थानोंसे लेकर फिर उसे एकत्र करै ॥ ३४ ॥

मंत्रयित्वाञ्जयेन्नेत्रेदेवैरपिनदृश्यते ॥ ३५ ॥
ॐहूंफट्स्वाहा कालीमहाकालि मांसशोणितभक्षिणि
रक्तकृष्णमुखेदेवीमामेपश्यतुमानुषेति ॐहूंफट्स्वाहा॥एतन्मन्त्रायुतजपात्सिद्धिदोभवति ॥
उक्तास्सर्वेअदृश्यीकरणप्रयोगाः ॥
अनेनमंत्रेणाष्टोत्तरशताभिमंत्रिताअंगुलीतैल
प्रयोगात्सिद्धाभवन्ति ॥
अंगुलीतैलसंसिक्तायवाःपंचदिनावधि ॥
त्रिलोहवेष्टितास्तेषांगुटिकांकारयेच्छुभाम् ॥३६॥

फिर अभिमंत्रित कर नेत्रोंमें लगानेसे देवताओंको भी नहीं दीखता है 'ॐहूं फट् काली महाकाली मांसशोणितकी भक्षण करने वाली रक्तकृष्णमुखे देवि पश्यतु मानुषेति ओंहूं फट् स्वाहा'यह मंत्र १०००० जपनेसे सिद्धि होती है यह सब अदृश्य करनेके प्रयोग हैं इस मंत्रसे एक सौ आठवार अभिमंत्रित करनेसे सिद्धि होती है ॥ अंगुली गजकर्णीके तेलसे पांच दिनपर्यन्त जौ को सिंचन करै और उनको त्रि[1]लोहसे वेष्टित कर सुन्दर गुटिका बनावै ॥ ३५ ॥ ३६ ॥

अदृश्यकारिणीसातुमुखस्थानात्रसंशयः ॥
तत्तैलंसर्षपाश्वेतात्रिलोहेनतुवेष्टिता ॥ ३७ ॥

अवश्य अदृश्यकरणी विद्या प्राप्त होजातीहै इसमें सन्देह नहीं यह तेल श्वेतसरसों और त्रिलोहसे युक्त करके अर्थात् गुटिका बनाय चांदी ताम्बे आदिसे मढ ॥ ३७ ॥

---

१ सोना, चांदी, ताम्बा ।

गुटिकामुखमध्यस्थासाक्षाददृश्यकारिणी ॥
कृष्णकाकस्यरुधिरंपित्तंगोमायुसंभवम् ॥ ३८ ॥

मुखमें रखनेसे अदृश्य होजाताहै काले कौएका रुधिर गीदडका पित्ता ॥ ३८ ॥

काकारिनखचंच्वापिसमभागंविचूर्णयेत् ॥
ऋक्षेपुनर्वसौवर्त्तिंकृत्वानेत्रेचरंजयेत् ॥ ३९ ॥

उलूकके नख चोंच यह समान भाग लेकर चूर्ण करै और पुनर्वसुनक्षत्रमें इसकी बत्ती बनाय नेत्रोंको आंजै ॥ ३९ ॥

अदृश्योभवतिक्षिप्रंसर्वकार्य्यप्रसाधकः ॥
कृष्णकुक्कुटपुच्छाग्रंनिर्माल्यं[1]मृतकस्यच ॥ ४० ॥

तौ वह शीघ्र अदृश्य होजाताहै तथा सब कार्यसिद्ध होतेहैं कालेमुर्गेकी पूंछका अग्रभाग मृतकका निर्माल्य ॥ ४० ॥

काकनेत्रंचमरिचंपिष्ट्वाकार्यंचमूत्रकैः ॥
कलायार्द्धप्रमाणेनवटींकृत्वाप्रशोषयेत् ॥ ४१ ॥

कौएका नेत्र कालीमिर्च अश्ववला यह गोमूत्रके साथ पीसकर बेरकी बराबर इसकी गोली बनाकर सुखाले ॥ ४१ ॥

तेनैवांजितनेत्रस्तुअदृश्योभवतिध्रुवम् ॥
कृष्णमार्जारांतरस्थंरक्तंसंगृह्यभावयेत् ॥ ४२॥

इससे नेत्रोंको आंजै तो अवश्यही अदृश्य होजाताहै काली बिल्लीका रक्त ग्रहणकर भावना देनेसे ॥ ४२ ॥

नक्तमालस्यतैलेनतत्रश्वेतार्कसूत्रजाम् ॥
वर्तिंप्रज्वाल्यवज्रस्य[2]दलेसंगृह्यकज्जलम् ॥ ४३ ॥

नक्तमाल ( करंज ) तैलद्वारा यत्नपूर्वक श्वेतआककी कपासकी बत्ती बालकर वज्रवृक्ष ( सेहुड ) के पत्तोंसे काजर ग्रहणकर ॥४३॥

---

१ शंकरस्यच इति पाठः । २ बदरस्यदले इति पाठः ।

तेनांजनेनमनुजस्त्वदृश्योभवतिध्रुवम् ॥
सुकृष्णंचैवमार्जारंमारयित्वाचतुष्पथे ॥ ४४ ॥

उसके आंजनेसे अवश्यही मनुष्य अदृश्य होजाताहै अथवा चौराहेमें कालीबिल्लीको वधकर ॥ ४४ ॥

प्रोक्षणंकारयित्वातुदिनानांपंचविंशतिः ॥
तत्संगृह्यप्रयत्नेनक्षालयेच्छीतवारिणा ॥ ४५ ॥

पच्चीस दिनपर्यन्त उसे प्रोक्षण करै अर्थात् ग्रहण कर शीतल जलसे धोवै ॥ ४५ ॥

यदस्थिचश्रोत्रभेदीस्याद्ग्राह्यंयत्नतोभयम् ॥
पूजयित्वामहाकालींगोरोचनसमन्वितम् ॥ ४६ ॥

यदि अस्थि श्रोत्रभेदी हो तो यत्नसे ग्रहण कर गोरोचनसे महाकालीकी पूजा जप करै ॥ ४६ ॥

नकुलस्यतुपित्तेनभावयित्वाप्रपेषयेत् ॥
तद्वर्त्तितिलकादेवनरोदृश्योभवेद्ध्रुवम् ॥ ४७ ॥

उसे नौलेके पित्तकी भावना देकर पीसे उसकी बत्तीसे तिलक करनेसे अवश्य ही मनुष्य अदृश्य होजाताहै ॥ ४७ ॥

नृमांसंचशिवामांसंयत्नतोग्राहयेद्बुधः ॥
प्रथमंरजस्वलायाश्चरुधिरेणवटींकुरु ॥ ४८ ॥

मनुष्य और गीदडीका मांस यत्नसे ग्रहण करके प्रथम रजस्वला हुई स्त्रीके रुधिरसे उसकी वटिका बनावे ॥ ४८ ॥

त्रिलोहवेष्टितासातुमुखस्थादृश्यकारिणी ॥
कृष्णमार्ज्जारमुण्डेतुकृष्णगुंजांप्रवापयेत् ॥ ४९ ॥

चांदी तांबे अथवा सोनेसे मढकर उसे मुखमें रखनेसे मनुष्य

अदृश्य होजाताहै कालीबिल्लीके मुखमें काली चौंटली बोवे ॥४९॥

तत्फलम्वदनस्थंहिसाक्षाददृश्यकारकम् ॥
कोकायानयनंवामंत्रिलोहेनप्रवेष्टयेत् ॥ ५० ॥

उससे उत्पन्न हुआ उसका फल मुखमें रखनेसे मनुष्य अदृश्य होजाताहै कोयलका बायां नेत्र त्रिलोहसे वेष्टित कर ॥ ५० ॥

सावटीमुखमध्यस्थाअदृश्यंकुरुतेध्रुवम् ॥
दिवाभीतस्यनयनंत्रिलोहेनप्रवेष्टितम् ॥ ५१ ॥

वटी बनाय मुखमें रखनेसे प्राणी अदृश्य होजाताहै अथवा उल्लूका नेत्र चांदी सोने आदिसे मढकर ॥ ५१ ॥

मुखस्थंकुरुतेदृश्यंयथेच्छंविचरेन्महीम् ॥
अक्षेचैवानुराधायांवन्दांराक्षसवृक्षकाम् ॥ ५२ ॥

मुखमें रखनेसे मनुष्य अदृश्य होजाताहै फिर जहां इच्छाहो वहां विचरे, अनुराधानक्षत्रमें रोहितक वृक्षका वन्दा ग्रहणकर ॥ ५२ ॥

मुखेप्रक्षिप्यचनरोअदृश्यःस्यान्नसंशयः ॥
शाखोटस्यचवन्दाकंनक्षत्रेमृगशीर्षके ॥ ५३ ॥

मनुष्य मुखमें रखनेसे अदृश्य होजाताहै इसमें सन्देह नहीं मृगशिरनक्षत्रमें शाखोट वृक्षका वन्दा ग्रहणकरै ॥ ५३ ॥

गृहीत्वापानपात्रेणअदृश्योजायतेनरः ॥
भरण्यांतुसमागृह्यवन्दांकार्पाससम्भवाम् ॥ ५४ ॥

अर्थात् इसे पानपात्रद्वारा ग्रहण करनेसे मनुष्य अवश्यही अदृश्य होजाताहै इसमें सन्देह नहीं भरणीनक्षत्रमें कपासका वन्दा लेकर५४

हस्तेबध्वाह्यदृश्यःस्यात्स्वात्यांवानिम्बवृक्षजाम् ॥
पिबेदुत्तरषाढायामशोकवृक्षसंभवाम् ॥ ५५ ॥

हाथमें बांधनेसे मनुष्य अदृश्य होजाताहै अथवा स्वातीनक्षत्रमें

नीमका वन्दा ग्रहण करै अथवा उत्तराषाढमें अशोकवृक्षका वन्दा ग्रहण करै ॥ ५५ ॥

वन्दांतदाअदृश्यःस्यादश्विन्यांबिल्ववृक्षजाम् ॥
वन्दाकंवाकरेधृत्वाअदृश्योजायतेनरः ॥ ५६ ॥

इति अदृश्यकरणम् ॥

वा अश्विनीनक्षत्रमें बेलके पेडका वन्दा लावै और हाथमें धारण करनेसे मनुष्य अदृश्य होजाताहै ॥ ५६ ॥

इति अदृश्यकरणम् ॥

---

## अथमृतसंजीवनी ॥

मृतसंजीवनींविद्यांप्रवक्ष्यामिसमासतः ॥
लिंगमंकोलवृक्षाधःस्थापयित्वाप्रपूजयेत् ॥ ५७ ॥

संक्षेपसे मृतसंजीवनी विद्याको कहताहूं । ढेरेके वृक्षके नीचे लिंगको स्थापन कर पूजाकरै ॥ ५७ ॥

नवंघटंचतत्रैवपूजयेल्लिंगसंनिधौ ॥
वृक्षंलिंगंघटंचैवसूत्रेणैकेनवेष्टयेत् ॥ ५८ ॥

और उन्हीके निकट नवीन कलश वा घटको स्थापन करके पूजन करै उस वृक्ष लिंग और घटको एकही सूत्रसे वेष्टित करै ५८॥

चतुर्भिस्साधकैर्न्नित्यंप्रणिपत्यक्रमेणतु ॥
एवंद्विद्विदिनंकुर्य्यादघोरेणसमर्चयेत् ॥ ५९ ॥

चार साधकोंसे नित्य प्रणाम करके दो दिन बराबर यह विधान कर अघोरमंत्रसे शंकरका आराधन करै ॥ ५९ ॥

पुष्पादिफलपाकांतंसाधनंकारयेद्बुधः ॥
फलानिपक्कान्यादायपूर्वोक्तंपूरयेद्घटम् ॥ ६० ॥

